जीवात्मा वस्तुतया ईश्वररूप होनेपरभी उसमें जीवबुद्धिसें संसरण और शोकादिक जो होतें है सो मोहमूलक है. श्वेताश्वतर उपनिषद् (४-७) में कहा है की शरीरमें पुराणपुरुष परमात्मा गुप्त रहा है और स्वयं ईश्वर होतेंहुवेभी अनीश्वरत्व बुद्धिसे मूढ बनकर शोक करता है याने संसारमें मैं कर्ता मैं सुखी मैं दुःखी ऐसा भ्रान्त होकर जन्ममरण अनुभवता है। और जिस समयमें नित्य तृप्त संसारशोकादिकसेंरहित परमेश्वरको स्वकीयरूपसें अभिन्न समझता है यानें साक्षात् करलेता है। उस समयमें शोक रहित बनकर याने देहादिकसें भिन्न होकर स्वरूपाभिन्न होनेंसें आध्यात्मिकादि त्रिविधतापोंसें रहित होकर समस्त उपाधि रहित परमेश्वरके सर्वात्मता सर्वज्ञतादिक महिमाको (जीवात्मा) प्राप्त होता है, याने उस परमेश्वरसें अभिन्न न होकर उस (परमेश्वर) का महिमा प्राप्त नहि होसक्ता इससें वह (जीवात्मा) ईश्वररूप होनेपरभी भ्रान्तिमें जीवभावापन्न हुवा था, परंतु भ्रमापनयन करके तद्रूप होजाता है अर्थात् वास्तविक एकही होनेपरभी भेदप्रतीति मोह मूलक है यह सिद्ध हुवा। अनुभव दशामें लौकिकबुद्धिसें भेद स्वीकार करके कहतें हैं की—उन् दोनोंमेंसें एक (जीवात्मा) स्वादिष्ट कर्मफलका उपभोग करता है, और यह उपपन्नभी है की जिसनें जो उपलब्धकीया हो सो उसको स्वादुतर होता है, और अन्य जो परमात्मा है सो नित्यतृप्त होनसें स्पृहारहित होकर उस फलका उपभोग न करता हुवा स्वरूपमें अभ्यस्त सचराचर प्रपंचको साक्षिभूत होकर देखरहा है। इससें कल्पितभेदका अंगीकार करके "उन दोनोंमेंसें एक" ऐसा कहा है, और वास्तविकतो—"अनीश्वरत्वभ्रमसें मूढ होकर (वहि) शोचता है" ऐसा कहनेसें अभेद स्फुट पाया जाता है ॥२०॥

१५. २-३ १८ यत्रा॑ सु॒प॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति।
इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥ २१ ॥

यत्र यस्मिन्नात्मनि सुपर्णा शोभनपतनानि स्वस्वविषयग्रहणाय गमन कुशलानीन्द्रियाणि चक्षुरादीनि अमृतस्य भागम्, अत्र विषयावच्छिन्न चैतन्यममृत मित्युच्यते, तस्य भाग भजनीय स्वस्वांशमनिमेष निमेषरहित मनारत विदथा वेदनेन वृत्त्यवच्छिन्नचैतन्येनावरुद्धान्याभिस्वरन्ति अभिप्रयन्ति आवरणापगमनेन स्फोरयन्ति। किञ्च यस्मिन स्वाम्यस्य देहस्य विश्वस्य भुवनस्य गोपा गोपायिता

रक्षिता, यद्वा विश्वस्य भुवनस्य भूतजातस्य स्वामी अस्य देहस्य गोपा, अनेन तत्त्वंपदार्थयोरेकत्वं प्रतिपादितं भवति। स परमेश्वरो धीरः समाधिनिष्ठः सर्वदाऽविक्रियः मा मां पाकं परिपक्वमनस्कं यागदानादिनाऽपगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं मा आविवेश, उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः। यद्वा अपरिपक्वमना अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीति अविद्वान् ततः परमस्ति कश्चित् सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य पश्चाद्गुरुशास्त्राभ्यां स एवाहं अस्मीतिमत्वा एवपारंपर्येणावगत्य असंभावनाविपरीत भावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्मा अभूवमित्यर्थ। अयमेव समाधीरः पाकमत्राविवेश इत्यनेनोच्यते। नन्वनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात्प्राप्तिरेव नोपपद्यते? सत्यमत्र प्राप्तिर्द्विविधा, प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति, प्राप्तस्यापि कण्ठेचामीकरन्यायेनावरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते ॥ २१ ॥

अनुवाद—जिस परमात्मामें स्वस्वविषय ग्रहण करनेमें निपुण चक्षुरादिक इन्द्रियाँ अमृत (इष्टविषयरूप स्वकीय अंश) को अनिमेषवृत्तिसें अर्थात् निरन्तर प्रमाणावच्छिन्न चैतन्यसे अभिन्न होकर आवरणाभिभव करके स्फूर्तिकोपाती है. और जो परमात्मा इस् शरीरका नियामक है, और ब्रह्माण्डका रक्षक है, अथवा समग्र भूतभौतिक समूहका जो स्वामी है, और इस् शरीरका रक्षक है, (इससें तत् और त्वं पदार्थकी एकता सिद्ध होती है) वही परमेश्वर समाधिनिष्ठ याने सर्वदा निर्विकार होते हुवे, यागदानादिकसें रजोगुण तमोगुण रहित बनकर दर्पणवत् अत्यन्त निर्मल सत्वगुणकी (विशेष) अभिव्यक्तिवाले मेरे मनमें (सतत) आविष्ट है, यानें निर्मल चित्तमें वैसा तत्त्व स्फुरित होता है। अथवा संस्कारहीन मनवाला में पहिले अज्ञानदशामें मुझसें अन्य किसी ईश्वरको मानता नहिं था. उसके बाद (संस्कार होनेंसे) कोइ सर्वज्ञ सर्वशक्तिमान् सत्यज्ञानानन्दरूप परमेश्वर है ऐसा परोक्ष ज्ञान संपादन करके गुरुशास्त्रादिकका परिचय होनेसे वह ईश्वर मेंही हु ऐसा परंपरासें असंभावना विपरीत भावनाको दूर करके सद्भावनाद्वारा अपरोक्ष अनुभव करनेंसें मे परिपूर्ण परमेश्वर हो चुका हुं, यही अर्थ "समाधिनिष्ठ वह ईश्वर मेरे चित्तमे आविष्ट है" यहा (पूर्वमें) कहा गया है. ननु देशकालादिसे अपरिच्छिन्न परमेश्वरकी प्राप्ति कैसे उपपन्न हो सक्ती है? (समाधान) अप्राप्त प्राप्ति और प्राप्त प्राप्ति ऐसे दो तरहकी प्राप्ति है. उसमें

सें यहां कण्ठमें रहतें हुवेभी विस्मृत अलंकार की स्मृति होनेसें जैसे प्राप्तित्व-व्यपदेश होताहै तैसें यह नित्य प्राप्त परमेश्वरकीभी प्राप्ति उपपन्न है. ॥२१॥

१६ २ ३ १८ यस्मिन्वृक्षेमध्वदः सुपर्णानिविशंते सुवतेचाधिविश्वे ।
तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यः पितरंनवेद ॥२२॥

यस्मिन् परमात्मनि वृक्षे वृक्षवद्गमनादिरहिते अविक्रिये सुपर्णाः शोभन गमनानीन्द्रियाणि मध्वदः मधुनो ज्ञानस्य अत्रीणि तद्ज्ञानेन ज्ञानभाञ्जि इत्यर्थः, निविशन्ते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तानि आत्मनि वृत्त्यालीयन्ते, पुनः प्रबोधकाले अधिविश्वे विश्वस्योपरि सुवते च उद्यन्ति स्वस्वविषयान् लभन्त इत्यर्थः, तस्यपरमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वादु आस्वादनीयममृतत्वलक्षणं ज्ञानं, यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तद्धिस्वादुतमम्, इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वादापातस्वादूनि, तत्फलमग्रे स्वरूपज्ञानोत्तरकालमाहुः, यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारमात्मानं वा न वेद न जानाति गुरुशास्त्रात्स तत्फलं नोन्नशत् न प्राप्नोति, अत आत्मानं यो वेद सएव तन्मोक्षफलं प्राप्नोतीत्यर्थः । यद्वा "चर्मवदाकाश" मित्यादि श्रुतिर्ज्ञाना दन्योपायस्या मृतत्वप्राप्तिंनिवारयति। "ब्रह्मवेदब्रह्मैवभवती" त्यादिकानुज्ञा प्राप्तिमाह तस्मादीदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थ ॥२२॥

अनुवाद—वृक्षवत गतिरहित निश्चल निर्विकार जिस परमेश्वरमें सुंदर, गमनवाली इन्द्रियाँ ज्ञानका उपभोग करके निद्राके समयमें अपनें अपनें विषयोंसें निवृत्त होकर (परमेश्वरमें) वृत्ति सहित लीन होतीं हैं, और जाग्रतकालमें प्रपञ्चान्तर्गत पदार्थों (विषयों) को ग्रहण करतीं हैं, उस् परमेश्वरसम्बन्धि अमृतत्व रूप ज्ञान जोकी आस्वादके योग्य होकर संसारसें उद्धार करनेवाला है और जिस ज्ञानफल मोक्षके आस्वाद लेनेंसें फिरसें भूखप्यास शोकमोह जरामृत्यु वगैरहसें (अधिकारी) रहित होजाता है, इससें जो फल परम स्वादिष्ट है, नहि की स्वर्गादिककी तरह पुनः पुनर्जन्ममरणादिक देनेंसें आपात (उपरसें) स्वादिष्ट है, वह फल स्वरूपज्ञान होनेके बाद होसका है. जो पुरुष पितृवत् पालन करने वाला उस ज्ञानफलको अथवा उस फलके आधारभूत परमात्माको गुरूंदेशसें और शास्त्रावगाहन करके नहीं जानता सो (उस् फलको) प्राप्त हो सका नहिं,

यानें जो परमात्माका अपरोक्षतया अनुभव करता है वही उस् मोक्षरूप फलको उपलब्ध कर सक्ता है. अथवा "जिस समयमें लोक आकाशको चर्म की तरह लपेटलेंगे तबही आत्मज्ञानके सिवायभी मोक्ष प्राप्त कर सकेंगे" यह श्रुति अमृतत्व प्राप्ति के ज्ञानातिरिक्त उपायान्तरको निवारित करती है. "ब्रह्मको जाननेवाला ब्रह्मही बनता है" यह श्रुतिभी ज्ञानहीसें मोक्ष प्राप्तिको बतलाती है. इसलिये परमेश्वरका यथार्थ ज्ञान संपादन करकेही में मुक्त होजाउं. (ऐसा अधिकारिका कथन है) ॥ २२ ॥

१७ २ ३-१९- अनच्छयेतुरगातुजीवमेजद्ध्रुवमध्यआपस्त्यानाम्

जीवोमृतस्यचरतिस्वधाभिरमर्त्योमर्त्येनासयोनिः ॥३०॥

अनेन देहस्यासारता जीवस्य नित्यत्वंच प्रतिपाद्यते । इदंशरीरं जीवावस्थाया मनत् प्राणनंकुर्वत् जीवं जीवनवत् तुरगातु स्वव्यापाराय तूर्णगमनं सदेजत्कंपमानंसत् शये शेते वर्तते, पश्चात्प्राणापगमनानन्तर मुक्तविलक्षणंसत् ध्रुवमविचलितंसत् पस्त्यानां गृहाणां मध्ये आशेतेप्याशेतेच स्थाणुवात्तिष्ठति । जीवस्यवैलक्षण्यमाह—मृतस्यशरीरस्यसंबन्धी जीवः मर्त्येन मरणधर्मकेनशरीरेण सयोनिः पूर्वं समानोत्पत्तिस्थानः, यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तत्सद्भावात् तत्सम्बन्धेनोपचर्यते तदेवाह—अमर्त्यः अमरणस्वभाव "जीवापेतंवावकिलम्रियते" इतिश्रुते (छा ६-११-३)। उक्तस्वभावोजीव स्वधाभिश्चरति, पुत्रैः स्वधाकारपूर्वकं दत्तैरन्नैश्चरति वर्ततइत्यर्थः ॥ ३० ॥

अनुवाद—इस मन्त्रसे शरीरकी असारता और जीवकी नित्यता बतलाते है— यह शरीर जीव सहित होनेंसे श्वासोच्छ्वास लेता है. जीवनवाला कहाजाताहै. अपने व्यापारके लिये स वर गतिवाला होताहै- चञ्चल होकर रहता है. और प्राणोत्क्रमण (मरण) होनेके बाद पूर्वोक्त प्रकारसें विपरीत बनकर अपने स्वभावसिद्ध गुणवाला याने जड होनेसें अचल होकर गृहोंकी मध्यमें स्थाणु (कटा हुवा और शाखापत्रादि रहित वृक्ष) की तरह रहता है. और "जीव उससें विलक्षण है" ऐसा कहते है—मृत शरीरके साथ (आपाततः) संबन्धवाला जीवात्मा मरण जन्म धर्मवाले शरीरके साथ समान उत्पत्ति स्थान"

वाग्न होते हुवेभी स्वयं असर्थ है याने देहादिगत जन्मादि विकारसें रहित है. श्रुतिभी कहती है की "जीवभिन्न सकल पदार्थ नष्ट होते है जीवात्मा नष्ट होता नहि" याने जीवात्मा जन्म मरण रहित होते हुवे भी शरीरसंबद्ध होनेसें शरीरगत विकारका आरोप पात्र उपचारसें बनता है. ऐसा यह जीवात्मा (अपनें) पुत्रोंनें "स्वधा" शब्दोचार पूर्वक दीये हुव अन्नादिकको स्वीकार करके विचरता है-रहता है. ॥ ३० ॥

१८. २ ३ २० यईंचकारनसोअस्यवेदयईंददर्शहिरुगिन्नुतस्मात् ।

समातुर्योनापरिवीतोअन्तर्बहुप्रजानिर्ऋतिमाविवेश ॥३२॥

अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्माज्ञातव्य इत्यर्थःप्रतिपाद्यते, य पुमान् पुत्रार्थीईएन गर्भं चकार करोति विक्षिपति वा तत्कारणभूतस्यरेतसो विक्षेपद्वारेण न पुमानस्यतत्त्ववेद कर्मणिषष्ठीवा एनंगर्भं न जानाति, कथंभूतः कथवा केनप्रयोजनेनेति सर्वात्मना न जानातीत्यर्थ. । यश्चमातुरुदरस्थं ददर्श उदरवृद्ध्यन्यथानुपपत्त्याऽनुमानेन वा दर्शयति स तस्माद्द्रष्टु- सकाशात् सहिरुगिन्नुहि रुगित्यन्तर्हितनाम इच्छन्दः एवकारार्थ. नु निश्चये अत्यन्तमन्तर्हित एवखलु । यद्वा यः संसारावस्थायामिमेनं कृषिवाणिज्यवेदाध्ययनादिकं चकार सोऽस्यएतत्नवेद लोकान्तरे जन्मान्तरे वा, तथा यईमेनं ददर्श गिरिनदी समुद्रवन्ध्वादिकं ददर्श जीवसमये तस्माद्द्रष्टादिरुगिन्नु पृथगेव, अत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वाऽनुभवतीत्यर्थः, सवादृशो मातुर्जनन्याः योना योनौ अन्तः परिवीतः उल्बजरायुभ्या परितोवेष्टित. सन् बहुप्रजाः बहुजन्मभाक् अथवा उत्पन्नः सन् स्वयमपि अपत्योत्पादनेन बहुप्रजा निर्ऋतिमाविवेश, एव गर्भदुःख मनुभवन् निर्ऋत्यभिधान प्रदुःखमनुभवति यावत्स्वरूपभूतात्मज्ञान, अतस्तत्परिहारायात्माज्ञातव्य इत्युक्त भवति. ॥ ३२ ॥

अनुवाद-इस मन्त्रमें प्राणिमात्रका जन्म गर्भवासके क्लेशोंका अनुभव पूर्वक होनेसें उस महादुःखकी आत्यन्तिक निवृत्तिके लिये आत्मज्ञान संपादन करना अत्यन्त आवश्यक है सो प्रतिपादन करते है-जो पुरुष (गर्भाशयमें) गर्भ धारण कराताहै सो उस गर्भके स्वरूपको समझसका नहि याने उस गर्भाशयमें

प्रविष्ट होनेवालेप्राणीको जो दुःख होता है उसको किसी हालतसें जान नहि सक्ता. और जो प्राणी अपनी माताके उदरमें स्थितहोकर माताके उदरकी वृद्धिरूप चिह्नसें अनुमानद्वारा (माताके) गर्भिणीत्वको सूचित करता है सो भी बहारके लोक जोकी देखनेवाले (अनुमान करनेवाले) हैं उनसें अत्यन्त गुप्तही है याने गर्भाशयकी भीतर होनेवाले दुःखातिशयको अन्तःस्थित प्राणी बहारके जनसमूहको निरूपित करसक्ता नहि. अथवा जो पुरुष संसारमें खेतीरोजगार वेदशास्त्राध्ययनादिक करता हुवा हमेशां अपने कार्यमें तत्पर रहता हैं सो गर्भगत प्राणीके दुःखोंको किसी लोकमें या किसीजन्ममें हरगीज नहि जानसक्ता, और जो प्राणी गर्भाशयके बहार निकलकर पर्वतें नदीयाँ समुद्रें स्नेही संबन्धी इष्टमित्रोंका जीवदशामें अनुभव करता है सो इस स्थलमें अनुभूत विषयोंमेंका सर्व विषय किसी जन्ममें यातो किसी लोकमें पा सक्ता नहि. (क्योंकी विषय वर्ग सब दैवाधीन होनेसें सकल समयमें सकल विषय नहि पाया जाता) तो वह प्राणी माताके गर्भाशयमें आन्त्र और रुधिरमलमूत्रादिकसें लपेटाहुवा अनेक जन्म धारण करनेवाला बनता है. अथवा स्वयं उत्पन्न होकरके फिर स्वयंही प्रजोत्पत्तिमें तत्पर होकर अनेक संतानवाला बनता हुवा " निर्ऋति " नामक नरक (दुःख) को अनुभव तावत्काल पर्यन्त किया करता है की यावत्काल पर्यन्त स्वरूपभूत आत्माका, अपरोक्षानुभव नहि करसक्ता. इस लिये जन्म मरणादि, और गर्भवासादिक महादुःखोंकी आत्यन्तिक निवृत्तिके लिये आत्मज्ञान संपादनकरनां यह परमावश्यकहै. ॥ ३२ ॥

१९. २ ३ २१ सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठन्तिप्रदिशाविधर्मणि।
तेधीतिभिर्मनसातेविपश्चितःपरिभुवःपरिभवान्तिविश्वतः॥३६॥

सप्तार्धगर्भाः सप्त महदहङ्कारौ पञ्चतन्मात्राणीति मिलित्वा सप्तसंख्यानितत्त्वानिअर्धगर्भाः, अविकृतरूपाः विकाराश्रयायाः मूलप्रकृतेः प्रकृतिविकृतेः उदासीनस्यात्मनश्चोत्पन्नत्वादर्धांशेन प्रत्यक्षाकारेण परिणामादर्धगर्भाः पुरुषांशस्याविक्रियत्वादित्यभिप्रायः, अतएव तेषामकृतिविकृतित्वं, यस्मादेवंतस्माद्भुवनस्यरेतः कारणं कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशाप्रदेशेन तिष्ठन्ति। किञ्च ते धीतिभिः प्रज्ञाभिः मनसा जगदुपकारः कर्तव्य इति बुद्ध्या।

च विश्वतः सर्वतः विश्वं परिभवन्ति परितो भावयन्ति कृत्स्नं जगद्व्याप्नुवन्तीत्यर्थः। यस्मादेवं तस्मात् ते त एव विपश्चितो बुद्धियुक्ताः परिभुवः सर्वत्र व्याप्ताश्च ॥ ३६॥

अनुवाद—महत्तत्व अहंकार पंचतन्मात्रायें यहसब मिलकर सप्ततत्त्व अविकृतरूपहैं, कर्मोंकी—विकारोंकी आश्रयभूत मूलप्रकृति और निर्विकार उदासीन आत्मासे यह सप्त तत्त्व उत्पन्न हुवेहैं. इसमें अर्ध अंशसे प्रपंचाकारेण परिणत हुवेहैं. और अर्ध अंश (पुरुषांश सच्चिदानन्दरूप) से अविकृतहै. इसीलिये उनतत्त्वोंको पंडितलोक "प्रकृतिविकृति" शब्दसे व्यवहार करते हैं. तो यह सात तत्त्व जोकी ब्रह्माण्डके रेतोवत् कारणभूतहै, वे व्यापक पुरुषके जगद्धारणरूप व्यापारमें तत्पर हैं, और बुद्धिपूर्वक जगदुपकार करना चाहिये इस हेतुसे समग्र विश्वको अपने स्वरूपसे व्याप्तकर रहेहैं-इसी उद्देशसे वे महदादिक व्याप्त हो रहेहैं. ॥ ३६ ॥

२० २ ३-२१ नविजानामियदिवेदमस्मिनिण्यःसनद्धोमनसाचरामि ।
यदामागन्प्रथमजाऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥३७॥

अहंयदिवेदं यदपीदंविश्वमास्मि कृत्स्नःप्रपञ्चोऽप्यहमेवास्मि, नामरूपांशमपरमार्थत्यक्त्वा सर्वत्रानुगतोऽस्मि, योयंसच्चिदानन्दाकारोऽस्ति सोहमस्मीति न विजानामि, विविच्य नाज्ञासिषं, परं शास्त्रजनितमिदमहमस्मीतिविज्ञानं न जातम् अविवेकी अहमित्यर्थः। कार्यकारणयोरभेदात् कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति "इदंसर्वं यदयमात्मा. ब्रह्मैवेदं सर्वं" ( मुं. २–२–११ ) आत्मैवेदं सर्वं "सईक्षतबहुस्यां प्रजायेये" त्यादिश्रुतिभ्यां एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् "तदनन्यत्वमारंभणशब्दादिभ्य" (ब्र. सू २-१-१४) इत्याद्युपपत्तिभ्यश्च प्रपञ्चस्य ब्रह्मानन्यत्वंसिद्धं. यद्वा इवशब्दः उपमार्थः यदिव यत्परोक्षज्ञानं सर्वैकात्म्यरूपमानुभविकमस्ति तदिव तद्वदेवाहमस्मि, इदं सर्वमहमस्मीति ज्ञानं मे जातं मास्त्वेतद्दार्ष्टान्तिकभूतमानुभविकं सार्वात्म्यं यदस्ति तन्नविजानामि नप्राप्तोऽस्मि, शास्त्रजनितं सार्वात्म्यं ज्ञातं नत्वानुभविक मित्यर्थः। तत्र कारणमाह—यतोऽहं निण्यः अन्तर्हितः मूढचित्तः चित्तप्रत्यक्प्रवणाभावेन परिच्छिन्नइत्यर्थः, तत्रोपपत्तिमाह—सन्नद्धः अविद्यानामकर्मभिः सम्यग्बद्धोवेष्टितः अतएव मनसायुक्तः भावनासहिष्णुना

बहिर्मुखेन विक्षिप्तेनचेतसायुक्त सचरामि संसारे। अथवा मनसा सन्नद्ध चरामि इन्द्रियपरवंश एवसन् संसारे दु खमनुभवामि, न सार्वात्म्य जानामीति परिदेवते, यास्कोऽपीर्म परिदेवनार्थत्वेनोदाजहार"अथापि परिदेवना कस्माचिद्भावात् न विजानामि यदिवेदमस्मी"ति, बहिर्मुखचेतस· स्वरूपापरिज्ञानजनितं दु खम-यत्र श्रूयते–पराक विश्वानि व्यतृणत् स्वयमूस्तस्मात्पराक् पश्यति नान्तरात्मन्निति (कठ २-१-१) तर्हिकदैतद्भवतीत्याह–यदामाआगन् आगमिष्यति तदा किं तदुच्यते ऋतस्य परमार्थस्य परस्य ब्रह्मण प्रथमजा प्रथमोत्पन्न चित्तप्रत्यक् प्रवणजनितोऽनुभाव सयदा मा मा प्राप्नोति आदित् अनन्तरमेवात्यत्र गनेन अस्या वाच ऐकात्म्यप्रतिपादिकाया उपनिषद्वाच यदिवेदमस्मीत्युक्ताया वा भाग भजनीय शब्दब्रह्मणा व्याप्तस्य पर ब्रह्मपद मश्नुवे प्राप्नोमि, चित्तस्य बहिर्मुखता परित्यज्यान्तर्मुखतैव दुःसपादा, सायदास्यात् तदानीमेव स्वरूप द्रष्टु सुशकमवति पश्चाद्विलम्बाभावात्, यथा गिरिशिखरात्पतन् पाषाणोऽविलम्बेन पतति तद्वाचिच प्रत्यङ्मुखत्वस्य दु शकत्वमिति तत्रैवश्रूयते,"कश्चिद्धीर प्रत्यगात्मानमैच्छदावृत चक्षुरमृतत्वमिच्छन्नि" ति ॥ ३७ ॥

अनुवाद–यद्यपि समग्र प्रपञ्च मैंहीहु, कल्पित जो नामरूप उनको छोडकर सद्रूपसें सर्वत्र अनुगत मैंही हु, सच्चिदानन्दरूप मैं हु, तथापि विवेकपूर्वक में जान सक्ता नहि, याने शास्त्रजनित जो "यह सकल प्रपञ्च मैंही हु", ऐसा ज्ञान सो मुझे (अपरोक्ष) हुवा नहिं, इससें मैं अविवेकीहु, कार्य और कारणका अभेद होनेसें कारणीभूत ब्रह्मसें कार्यभूत प्रपच अभिन्न है याने प्रपच सब स्वरूप भूतही है, 'यह सकल प्रपच आत्मस्वरूप है, यह सब ब्रह्मही है, यह सर्व आत्माही है, उसने ईक्षण किया की मैं बहुत स्वरूप होउ, प्रजारूपसें प्रकट होउ" इत्यादिक श्रुतिओंसें एक विज्ञानपूर्वक सर्व विज्ञानकी प्रतिज्ञा करनेसें प्रपच ब्रह्मसें अभिन्न है. ब्रह्मसूत्रमेंभी (२ २ १४) "आरम्भण शब्दादिकों के प्रयोगसें प्रपच ब्रह्माभिन्न है" ऐसा सिद्ध किया है जबकी मन्त्रगत "इव" शब्द उपमार्थक है तब ऐसा अर्थ होता है, "सकल प्रपच एक ब्रह्मस्वरूप है" यह जो अनुभवसिद्ध परोक्षज्ञान है वैसाही मैं हु- "यह सब मैंहीहु" ऐसा ज्ञान मुझे हुवा परतु सिद्धान्तभूत अनुभवसिद्ध सर्वात्मता जो है सो मैं नहि जानसक्ता याने शास्त्रजन्य परोक्षज्ञान होनेपरभी सार्वात्म्यका अपरोक्षानुभव हुवा नहिं

क्योंकी अविद्याकामकर्मादिकोंमें मजबूत बंधा हुवा हुं. और इसीलिये असंभावना विपरीतभावनाधीन बना हुवा विक्षिप्त चित्तसें में युक्त होकर संसारमें दुःखानुभव कर रहा हुं लेकिन सार्वात्म्य भावको में पाता नहिं, ऐसा (कोइ अधिकारी) खेद कर रहा है. यास्कनेंभी इसमंत्रको खेदसूचनाहींमें प्रतिपादित किया है. "में सकल प्रपंचसें अभिन्न होनेपरभी मेरे यथार्थ स्वरूपको अपरोक्ष अनुभव कर सका नहिं" इत्यादि. बहिर्मुख चित्तवाले प्राणिको स्वरूपअज्ञानजनित दुःख उपनिषदोंमें सुनने में आता है " परमेश्वरने ( मन सहित ) इन्द्रियाँ पराग्वृत्तिवाली निर्मितकी है जिससें लोक पराक् (बाह्य) पदार्थका अनुभव कर सक्तें है परंतु प्रत्यक्पदार्थ अन्तरात्माका ज्ञानसंपादन कर सक्ते नहिं" यह प्रत्यक्पदार्थ दुर्लभ होनेपर भी अन्तःकरण जिस समयमें प्रत्यक्पदार्थकी ही उपलब्धिमें प्रवणहोगा तब इस सर्वात्मताप्रतिपादकउपनिषद्वाणीके लक्ष्यार्थभूत ब्रह्मपदको में प्राप्त कर सकुंगा. याने चित्तकी बहिर्मुखता-विषय लाम्पट्य छोडाकर दुर्घट जोकी अन्तर्मुखता है सो जिसकालमें हो सकेगी तबही स्वरूप साक्षात्कार विनाविलंबसें हो सकेगा। जैसें पर्वतके शिखरसें गिरनेवाला पथ्थर विना विलंबसें भूमिपर पहोंचता है तैसेंही चित्तकी अन्तर्मुखता होनेकेबाद त्वरितही अपरोक्षानुभव हो सकेगा. "कोइ वीरपुरुष जन्म मरणसेरहित होनेको चाहता हुवा मन सहित इन्द्रियोंको विषयोंसें विमुख बनाकर आत्मसाक्षात्कार कर लेता है" ॥ ३७ ॥

२१. २ ३ २१ अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।

ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥ ३८ ॥

अन्वयः अमरणधर्मायमात्मा मर्त्येनमरणधर्मणा भूतात्मना देहेन सयोनिः, समानस्थानत्रयपरिच्छेदको देहोऽस्ति तत्रसर्वत्र सोऽयमपितिष्ठन्नित्यर्थ, यद्वा स समानोत्पत्तिः सहवासेन; स्वस्मिन्नुत्पत्तिरुपचर्यते, एवंभूतःसन् स्वधया अन्नोपलक्षिततद्भोगेनगृभीत, यद्वा स्वधाशब्देनान्नमयं शरीरं लक्ष्यते, तेनगृहीतः सन्नपाङेति अशुभंकर्मकृत्वाऽधोगच्छति, प्राङेति ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति, परमात्मैवसूक्ष्मशरीरोपाधिकःसन् नानाविधंकर्मकृत्वा तद्भोगाय जीवसंज्ञा लब्ध्वा शरीरत्रयेणसंबद्धो लोकान्तरेषुसंचरति। स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितःसन् परिभ्रमति, तथाचश्रूयते " गुणान्वयो यः फलकर्मकर्ता कृतस्य-

तस्थिवसचोपभोक्ता, सविश्वरूपस्त्रिगुणस्त्रिवर्त्माप्राणाधिपः संचरतिस्वकर्मभिः" इति। इदानीमुभयप्राधान्येनाह ते तौ भूतात्मकर्त्रात्मानौ शश्वन्ता अविभागेन सर्वदावर्तमानौ, यद्वासूक्ष्मशरीरपक्षे सर्वदासहवासउपपद्यते, स्थूलशरीरपक्षेऽपि सात्विकजातेः तत्कारणाना भूतसूक्ष्माणा सद्भावात् तत्रशरीरसम्बन्ध उपपद्यते। विषूचीना इहलोके सर्वत्रगमनौ, वियन्तातत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौवर्तेते, तत्रनराः अन्यंमूतात्मानं निचिक्युः नितरां विशेषेण पश्यन्ति जानन्ति, अन्यमपरं देहवच्छायातिरिक्तंननिचिक्युः न जानन्ति, केचन पामरा देहव्यतिरिक्तं न जानन्ति, केचन विवेकिनः कर्तृभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्तीत्यनुमिमते, न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति, अतोदुर्लभमात्मज्ञानमित्यर्थः॥२८॥

अनुवाद—जन्ममरणादिकसें रहित यह आत्मा मरणधर्मवाले भौतिक देहकेसाथ समान निवासवाला हुवाहे- याने देशकालवस्तुसें परिच्छिन्न देहमें अवस्थित होनेसें स्वयमपि ताद्दशधर्मवान् प्रतीत होता है, अथवा देहके साथ सहवास करनेसें देहादिगत जन्ममरणादिकवान् उपचारसें (आत्मा) कहाजाताहै, ऐसा यह आत्मा तत्तद्भोगोंसें ग्रहीत होताहुवा अथवा "स्वधा" शब्दोपलक्षित अन्नमय शरीरसें ग्रहीत बनाहुवा अनुचित कर्म करके अधोगतिको प्राप्त होता है. योग्य कर्म करके ऊर्ध्वगति स्वर्गादि लोकको प्राप्त होता है, यानें परमात्मा स्वयंही सूक्ष्मशरीररूप उपाधिको स्वीकारकरनेके बाद अनेक तरहके कर्म करके उनकर्मोंके भोगके लिये "जीव" सज्ञाको धारण करता हुवा स्थूलसूक्ष्मकारण यह देहत्रयसें सबद्ध होकर लोकान्तरमें पर्यटन कर रहा है. और स्थूलसूक्ष्म दोनों शरीरका परिग्रह करके लोकमें सत्वगुण रजोगुण और तमोगुण इनसें युक्त होकर परिभ्रमण कर रहाहै, श्रुतिमेंभी कहाहैकी "गुणत्रयके साथ वर्तमान होता हुवा और फल सहित कर्म करता हुवा और किये हुवे कर्मके फलोंकोभोगनेवाला वह जीवात्मा विश्वरूप होनेपरभी गुणत्रयाधीन बनकर प्राण और इन्द्रियादिकका अधिपति नियामक होनेपरभी तीनगुणके तीनतरहके मार्गपर अपने कर्मोंसें ससरणको पाताहै"। (अब जीवात्मा और परमात्माको उद्देश करके कहते हैं) भूतात्मा (देह) कर्त्रात्मा (जीवात्मा) दोनों विनाविभागसें सर्वदा वर्तमान है. यानें एक रूपही है. अथवा सूक्ष्मशरीर पक्षमें हमेशा (दोनोका) सहवास उप-

पन्न होसक्ताहै, और स्थूलसूक्ष्मशरीरपक्षमेंभी सात्विक जातिका और उस (जाति) के कारणभूत सुक्ष्म मूर्तोके सद्भाव (विद्यमानता) से वहांरभी शरीर संबन्ध उपपन्न हो सक्ताहै. वह देह और जीवात्मा इसलोकमें सर्वत्र तत्तत्फलोपभोगकेलिये गमनवाले बनतेहै. उनमेंमें लोक देहको जान सकेंहै. और जीवात्मा कीजो देहादिव्यतिरिक्त है उसको नहिं जानसक्के. याने कोइ पामर लोक आत्माको देहातिरिक्त नहिं समझ सके किंतु देह यही आत्मा है ऐसा मान रहें है, कोइ विवेकीलोक कर्तृत्वभोक्तृत्वधर्मवान् आत्मा है और वह देहेन्द्रियादिसंघातसें अतिरिक्त है ऐसा मानतें है, अनुमान करतेंहैं. लेकिन् कोइभी देहत्रयकासाक्षी आत्मा है, और निर्लेपहै, कूटस्थ है, ऐसा अपरोक्षकरसक्के नहिं. इस लिये आत्मज्ञान अत्यन्त दुर्लभहै ऐसा इस मन्त्रमें बतलायाहै. ॥३८॥

२२, २ ३ २१ ऋचोअक्षरे परमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुः।

यस्तन्नवेद किमृचाकरिष्यति यइत्तद्विदुस्तइमे समासते॥३९॥

पूर्वमन्त्रे देहात्मजीवात्मानावुक्तौ तयोरन्यस्यजीवात्मनः पारमार्थिकंरूपंयदस्तितदत्रोच्यते-ऋचोअक्षरे, अत्रऋक्शब्देन ऋक्प्रधानभूताः सांगापरविद्यात्मकाश्चत्वारोवेदाउच्यन्ते, ऋगादीनामपरविद्यात्वंमुण्डकेश्रूयते ( मु. २-४-५) "द्वे विद्ये वेदितव्ये" इतिप्रतिज्ञाय "तत्रापरा ऋग्वेदो यजुर्वेदः सामवेद" इत्यादिना. तस्याः सम्बन्धिन्यक्षरे अदृश्यादिगुणके क्षरणरहिते अनश्वरे नित्ये सर्वत्रव्यासे ब्रह्मणि, अक्षरशब्दस्य ब्रह्मवाचकत्वम् "एतद्वैतदक्षरस्यप्रशासनेगार्गि" ययातदक्षरमधिगम्यते " येनाक्षरंपुरुषंवेदसत्य" मित्यादिश्रुतिषुप्रसिद्धम् (बृ ३-८-९) ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्ध सर्वैर्वेदैः खलु ब्रह्माधिगम्यते "तंत्वौपनिषद पुरुषं पृच्छामि" इत्यादि (बृ. ३-९-२६) श्रुतेः। ननूपनिषद्भागानांतथास्तु इतरेषांतुकथंब्रह्मविषयत्वमित्युच्यते—यद्यपीतरभागानांयागादिविषयत्वं तथापिबुद्धिशुद्ध्युत्पादनद्वारा वेदनसाधनत्वेन ब्रह्मविषयाभविष्यन्ति "तमेतंवेदानुवचनेन ब्राह्मणाविविदिषन्ति" इत्यादिश्रुते। तदेव विशेष्यते-परमेउत्कृष्टे निरतिशये व्योमन् व्योमनि व्योमसदृशे, अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येन व्योमेत्युक्तम्। यद्वा विशेषेणसर्वंन्यरक्षके निरधिष्ठानोभ्रमः कस्यचिदस्ति साध्यस्तस्य सर्वस्याधिष्ठानत्वेनाक्षरत्वाचादृशेतस्वे सर्वमध्यस्तमित्यर्थ.। पुनस्तदेवविशेष्यते—यस्मिन्परमात्मनि

विश्वे सर्वे देवा अधिनिषेदुः निषीदन्ति आश्रित्यतिष्ठन्ति तस्मिन्, यद्वाउक्तलक्षणे वस्तुनि ऋगुपलक्षिताः सर्वेसाङ्गावेदाः पर्यवसिता इत्यर्थः, यः योमर्त्यः तच्चाँदृशं देवादीनां स्वरूपलाभास्पदंकृत्स्नैर्वेदैस्तात्पर्यं प्रतिपाद्यं यद्वस्तुनवेद नजानाति समर्त्यः ऋचापूर्वोक्तेमऋगादिशब्दजालेन किंकरिष्यति, वेदनसाधनेन वेदेन वेद्यमविदित्वाकिंसाधयतीत्यर्थः प्रयोजनाभावात्सर्वस्यापिवेदस्यवैफल्यादितिभावः, अथवा योऽक्षरमविदित्वाकर्मणा कर्ताभवति यागादीननुतिष्ठति तेनकिञ्चिदपि कर्म कृतं नभवतीत्यर्थः। येइत् येएव तत्तत्त्वं विदुर्जानन्ति तइमे समासते तएवेमेज्ञातार समासते सम्यक्तिष्ठन्ति अपुनरावृत्त्यास्वस्वरूपेऽवस्थानं समासनम्, यद्वा येविदुरित् येजानन्त्येव नानुतिष्ठन्ति इच्छन्दोऽवधारणे, तइमे तएवसमासते गवामयनादिसहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति, सहार्थेसमशब्दः, सत्रादधिकाना यागानामभावात् तेषामपिफलमेतज्ज्ञानेनैवप्राप्तंभवतीत्यर्थः कर्तॄणाबहुत्वाद्बहुवचननिर्देशः।

अपरे प्रकारान्तरेण प्रतिपादयन्ति-ऋचोऽक्षरे ऋगुपलक्षितसर्ववेदसम्बन्धिन्यक्षरे प्रणवरूपेॐकारे अविनाशिनि सर्ववेदेपुव्याप्तेवा, प्रणवस्यसर्ववेदसारत्वं ब्राह्मणेश्रूयते "तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयोवर्णाअजायन्ताकारउकारोमकारइति तानेकधासमभरत् तदेतदो३ मिती" ति। परमेनिरतिशये, नहि प्रणवादधिककिञ्चिन्मन्त्रजातमस्ति, त्रिकालातीतस्यब्रह्मणः प्रतिपादकत्वात् "यच्चान्य त्रिकालातीत तदप्योंकारएव"(मा॰ १-१)"ओमिति ब्रह्मेति"। वेदानामप्रणवस्यस्थान प्रतिनिधिभाव सम्बन्ध "यऋचोऽधीते" इत्याद्युपक्रम्य "यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपद्यते" 'एतद्वैयजुस्त्रयींविद्याप्रत्येषावागेतत्परमक्षर"मित्यादिश्रुतेः। यस्मिन्विश्वेसर्वेदेवाअधिनिषेदुः, प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवताना निवासात् सर्वदेवनिवासत्वम्, ब्रह्माधिष्ठानत्वाद्ब्रह्मणि सर्वदेवाना निवासात्, शिष्टमवशिष्टम्,-अपरेत्वन्यथावर्णयन्ति ऋचः ऋगर्चनीयो जीवतस्यसम्बन्धिन्यक्षरे अविनाशे व्याप्ते वा परमात्मनीत्यर्थः। अतएवजीवापेक्षयापरमे उत्कृष्टे निरपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रक्षके व्योमसदृशे वा यस्मिन्परमात्मनि देवागमनवन्तो व्यवहरन्तो वा इन्द्रियसंज्ञका विश्वेसर्वेऽपि अधिनिषेदुः निषीदन्ति, आश्रित्यवर्तन्ते, यस्तन्नवेद, नजानाति, उपाध्यंशपरित्यागेन तदेव स्वरूपमिति न पश्यति स्थूलेजनः किमृचा करिष्यति, केवलेन जीवभावेन

किंफलं प्राप्स्यतिजननमरणादिक्लेशस्यात्यागादितिभावः,, यद्वत् तद्विदुस्तइत्यादि-सिद्धम् ॥ ३९ ॥

**अनुवाद.**—पूर्व मन्त्रमें भूतात्मा और जीवात्माका निरूपण किया, उनमेंसे जीवात्माका पारमार्थिक स्वरूप जोहै सो कहतें है—ऋगादि वेदमें प्रतिपादित अतीन्द्रियत्वादिकधर्मवाले अविनाशि सर्वव्यापक समस्त विशेषोंसेरहित परम उत्कृष्ट आकाशवत् अरूपत्वनीरूपत्वादि धर्मवाले अथवा अच्छीतरहसें सबके रक्षण करनेवाले सकल प्रपञ्चके अधिष्ठानरूप जिस् परमेश्वरमें सकल देव आश्रित होकर वर्तमान है. यहां मूलमन्त्रमें " ऋक " शब्दसें ऋग्वेदादिक सकल वेद अङ्ग सहित उपलक्षित होतें है. मुण्डकोपनिषद्में ऋग्वेदादिक " अपरविद्या " शब्दसें कहे गये हैं—" दोविद्या अभ्यस्त करनी चाहिये परा और अपरा " ऐसा उपक्रम करके " उसमें " अपरविद्या ऋग्वेद, यजुर्वेद, सामवेद " इत्यादिकसें ऋग्वेदादिक सब अपरविद्या शब्द वाच्य है। और इस मन्त्रमें "अक्षर" शब्द ब्रह्मका वाचक है. याज्ञवल्क्य कहतें हैं की—"हेगार्गि इस अक्षरके प्रशासनमें (हुकुममें) सूर्यचन्द्र अधीन हो रहें है", (बृ० ३-८-९) और "वह परा विद्या है की जिससें उस अक्षर (ब्रह्म) की प्राप्ति होवी है " " जिससें त्रिकालाबाधित जिस पुराण पुरुषरूप अक्षर (ब्रह्म) को (अधिकारी) जानता है" इत्यादि श्रुतिमें अक्षर शब्द ब्रह्मवाचक बतलाया है. ऋग्वेद और अक्षरका प्रतिपाद्य प्रतिपादक भाव सम्बन्ध है "मैं (आपसें) उपनिषदसें (वेदसें) जाननेंयोग्य पुरुषका स्वरूप पूछताहुं" इत्यादिक श्रुतिसें सिद्ध हैकी सर्व वेदोंसें परब्रह्महीका अधिगम होताहै. ननु (शंका) उपनिषद्भाग परब्रह्मका प्रतिपादक भलै हो लेकीन् इतर वेदभाग ब्रह्मविषयक नहि हो सका ? (समाधान) यद्यपि इतरवेदभाग (कर्मकाण्डादिक) यज्ञादि विषयक है परतु वह निष्काम होनेसें अन्तःकरणको शुद्ध बनाकर ब्रह्म ज्ञानकी योग्यता संपादन करदेता है इससें वह ( कर्मकाण्डादि ) भाग भी ब्रह्म विषयक कहा जाता हैं, श्रुतिभी " ब्राह्मणलोक वेदप्रदर्शित प्रकारसें याने यज्ञदा-नादिकसें उस परमेश्वरको जाननेको चाहतें हैं." ऐसा कहती है. जिस परमेश्वरमें साङ्गवेद पर्यवसितहै याने जिस परमेश्वरके साक्षात्परंपरयावा प्रतिपादनहीमें परायण है, ऐसे परमात्मा की जिसके लाभसें ब्रह्मादिक देवभी स्वरूप लाभ मान रहें है और वेदोंका रहस्यरूप जो परमेश्वर है उसको नहि जाननेवाला किंवा जाननेके

लिये यत्नभी नहि करनेवाला मनुष्य ऋगादिक वेदवर्गसें क्या लाभ लेसकेगा याने ज्ञानसाधनभूत वेदसें ज्ञेयका ज्ञान प्राप्त न करके किस कार्यको वह (मनुष्य) सिद्ध करेगा, निष्प्रयोजन होनेसें उसके लिये तो वह वेद निष्फलही है. अथवा जो मनुष्य अक्षर ब्रह्म को न जानकर यागादिक कर्मका अनुष्ठान करता है वह (अखंड) फलको प्राप्त न होनेसें किसी कर्मका करनेवाला नहि हो सक्ता, याने किया हुवा कर्म स्वर्गादिफलदायक होनेपरभी अविनाशिपदप्रद न होनेसें परिश्रमरूपही है. और जो मनुष्य उस तत्त्वको यथार्थ जानतें हैं वे सम्यग् ज्ञानवाले होकर पुनरावृत्तिरहित जो स्वस्वरूप है उसमें अवस्थित (स्थिर) होजातें हैं. अथवा जो मनुष्य केवल जानतेंही है और अनुष्ठान नहि करतें वे स्वरूपलाभापन्न होनेसें यागादिकको विना किये उनके फलको पातें हैं. कोइ पण्डित लोक इस मन्त्रका ऐसा व्याख्यान करतें हैकी ऋक् उपलक्षित सकल वेद का सम्बन्धि अक्षर अविनाशि अथवा व्यापक निरतिशय ऐसे जिस प्रणवमें समग्र देव आश्रित हैं "वह प्रजापति उन वेदोमें पर्यालोचनात्मक तपश्चरण करने लगे. उनमेंसे अकार उकार और मकार यह तीन वर्ण प्रकट हुवे. उन तीनोंको सहोच्चारण करनेसे "ॐ" ऐसा (प्रणवरूप) होता है" त्रिकालातीत परब्रह्मका प्रतिपादक होनेसें प्रणवाधिक कोइ मन्त्र हैं नहि. "जो कुछ कालत्रयातीत है वह सब प्रणवही है" "ॐ यह ब्रह्म है" इत्यादिक श्रुतिमें प्रणवको ब्रह्मस्वरूप प्रतिपादन किया है. वेद यह स्थान है और प्रणव परमेश्वरकी प्रतिमा कहा जाता है. "जो प्रणवका स्वाध्याय करता है सो सबका स्वाध्याय करनेके फलको पाता है" इत्यादिक श्रुतिसें प्रणव परब्रह्मरूपही है यही प्रणव सकल देवोंका निवासरूपभी है क्योंकी सकल मन्त्रात्मक प्रणव है और मन्त्रोंमे सकल देवका निवास है, इस लिये परंपरा संबन्धसें सर्व देवके निवासभूत यह प्रणव है. परब्रह्मसें अभिन्न होनेसें और समग्र देवोंका अधिष्ठान ब्रह्म होनेसेभी यह प्रणव देवोंके निवासरूप है. दूसरे पण्डितलोक अन्यथा वर्णन करतें है.

ऋचासें प्रतिपादन करनें योग्य जो जीवात्मा उसके संबन्धी अक्षर याने अविनाशि अथवा व्यापक जीवकी अपेक्षासें उत्कृष्ट निरुपाधिक सर्वाधिष्ठान होनेसें सर्वका रक्षक अथवा आकाशवत् असंगत्वनिर्लेपत्वादिधर्मयुक्त जिन परमेश्वरमें व्यवहार विषयक देवशब्दवाच्य समस्त इन्द्रियां आश्रय करके वर्त-

मानहैं. जो ऐसा जानता नहिं याने उपाधिरूप अंशका अनादर करके निरुपाधिक स्वरूपको यथार्थ जो नहिं समझ सक्ता सो स्थूलबुद्धिवाला मनुष्य केवल जीवमात्रसें व्यवहार करता हुवा ऋचासें क्या करसकेगा- किस् फलको पावेगा? क्योंकी यथार्थ अपरोक्ष ज्ञानके विना जन्ममरणादिक क्लेशोंकी आत्यन्तिक निवृत्ति हो सक्ती नहिं और उसके सिवाय निरतिशय सुखभी पायाजाता नहिं, तो जो ऋगादिकका पठनपाठन जन्मादिक्लेशका निवर्तक नहि होसक्ता सो खाली परिश्रम रूपहै, ऐसा कहागया ॥ ३९ ॥

२३. २ ३ २३ इन्द्रंमित्रंवरुणमग्निमाहुरथोदिव्यः ससुपर्णो गरुत्मान्।
एकं सद्विप्राबहुधावदन्त्यग्निंयमंमातरिश्वानमाहुः ॥४६॥

अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः, तथामित्रं प्रमीतेर्मरणात्त्रातारमहरभिमानिनमेतन्नामकं देवमाहुः, वरुणंपापस्यनिवारकं रात्र्यभिमानिनं देवमाहुः, तथाग्निं मङ्गनादिगुणविशिष्ट मेतन्नामकमाहुः, अथो अविचार्यमेव दिव्यो दिविभवः सुपर्णः सुपतनोगरुत्मान् गरणवान् पक्षवान् वैतन्नामकोयः पक्ष्यस्ति सोऽप्ययमेव, कथमेकस्य नानात्वमिति उच्यते–अमुमेवादित्यमेकमेव वस्तुतः सन्तं विप्रामेधाविनः देवतातत्त्वविदो बहुधावदन्ति, तत्तत्कारणेनेन्द्राद्यात्मानं वदन्ति "एकैववा महानात्मा देवता ससूर्य इत्याचक्षते" इत्युक्तत्वात्, किञ्च तमेव वृष्ट्यादिकारणं वैद्युताग्निं यमं नियन्तारं मातरिश्वान मन्तरिक्षेश्वसन्तंवायुमाहुः सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तंभवति ॥ ४६ ॥

अनुवाद–इस् आदित्य शब्दके लक्ष्यार्थभूत परमेश्वरको समस्त ऐश्वर्य विशिष्ट "इन्द्र" ऐसा विद्वान् लोक कहतेहै. और इसी परमेश्वरको मरणसें बचानेवाला दिवसाभिमानी "मित्र" नामकदेव कहतेहैं. और इसीपरमात्माको पापोंका निवारक रात्र्यभिमानी देव "वरुण" ऐसा कहतेहै. और इसी परमेश्वरहीको गमनादिगुणविशिष्ट "अग्नि" देव ऐसाभी कहतेहै. दिव्यस्वरूप सुंदर पक्षवाला उत्तमगतिवाला अथवा "सुपर्ण" ऐसा नामवाला जो कोइ पक्षी है सोभी यह परमेश्वर हीहै. ननु (शंका) परमात्मा एक होनेपरभी नाना (अनेक) रूपवाला कैसे कहाजाताहै? (समाधान) आदित्य शब्दके लक्ष्यार्थ भूत इसी परमेश्वरको वास्तविक एक होनेपरभी देवतातत्त्वको जाननेवाले पण्डित-

लोक "नाना" (अनेकरूपवाला) कहतेहैं. यानें तत्तत्कार्यका स्वयं कारणरूप होनेसे इसी परमात्माहीको इन्द्रादि स्वरूप कहतेहै. अन्यस्थलमें कहाहैकी "यह आत्मा महान् है औरएकही देवताहै तथापि इसको (कार्यकारणके अभेदहोनेसे) सूर्य, अग्नि, वरुण, इत्यादि रूपात्मक कहतेहै" और इसी परमात्माको वृष्ट्यादिकका कारणभूत "वैद्युताग्नि" (बीजली) ऐसा कहतेहै. सकल विश्वका नियन्ता अन्तरिक्षमें विहार करनेवाला "महावायु" भी इसी परमात्माको कहतेहैं. इसमन्त्रमें आदित्यकी ब्रह्मसे अभिन्नता बताकर लक्ष्यार्थरूपमें सर्वात्मता बतलाइहै ॥ ४६ ॥

२४. ३. १. १ ॐम् इन्द्रंत्वावृषभंवयंसुतेसोमेहवामहे।
सपाहि मध्वो अन्धसः ९.॥

इदं सर्वं जगत्साक्षाद्दर्शयतीतीन्द्रः तत्संबुद्धौ हे इन्द्र! वृषभं कामानां वर्षकं त्वा त्वां सुते ग्रावभिरभिषुते सोमे वयं हवामहे, सोमपानार्थमाह्वयामः सत्वं मध्वः मदकरमन्धसः अन्नलक्षणं सोमं पाहि पिब. अथवा इदं ब्रह्म साक्षात्पश्यतीतीन्द्रः तत्संबुद्धौ हे इन्द्र! ॥१॥

**अनुवाद**—इस सकलप्रपञ्चको साक्षात् (हस्तामलकवत्) बतलानेवाले। यानें अधिष्ठानसाक्षात्कार कराके उस (अधिष्ठानमें कल्पित नामरूपात्मक प्रपंचका मिथ्यात्व यथार्थ अनुभव करानेवाले अथवा इस प्रपंचको (कार्यकारणके अभेदद्वारा) ब्रह्मस्वरूप समझनेसे सम्यग् ज्ञानवाले हे इन्द्र! (इन्द्र शब्दके लक्ष्यार्थ भूत हे उत्तमाधिकार संपन्न!) आपको आत्मसुख (निजानन्द) रूप अलभ्य लाभदायक समझके (इस यज्ञमें) पत्थरसे सिद्धकिये हुवे सोमरसके पानके लिये निमन्त्रित करतेहैं. (इस निष्कामयज्ञसे अन्तःकरणकी शुद्धि होनेपर आपके यहां आगमनसे सोमरससे आपका सत्काररूप शुश्रूषण करके हम ज्ञान संपादन करें) वह आप मदवाले यानें अहंतामतादि धर्मोंसे व्याप्त सोमशब्दित अन्नोपलक्षित इस देहको यानें आत्मामें अविद्याद्वारा अध्यस्त इस देहेन्द्रियादि संघातको उपभोग (स्वीकार) करें. अर्थात् आवरणको हटाकर कल्पित पदार्थोंका बाधपूर्वक स्वरूप लाभका अधिकारी हम को आप बनावें. इस मन्त्रमे प्रयुक्त इन्द्र शब्दका विशेष विशदीकरण ऐतरेयोपनिषद (१–३–१४) में किया है उसी अभिप्रायसे यहां लक्ष्यरूप अर्थ गृहीत किया है. ॥ १ ॥

२५.२ ४।१० तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि ।

धियोयोनः प्रचोदयात् ॥ १० ॥

यः सविता देवोनोऽस्माकंधियः कर्माणि धर्मादिविषयावाबुद्धीः प्रचोदयात् प्रेरयेत् तत्तस्य सर्वासु श्रुतिषु प्रसिद्धस्य देवस्य द्योतमानस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य आत्मभूतं वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च संभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकं तेजोधीमहि "तद्योऽहंसोऽसौ योऽसौ सोऽहमिति" वयंध्यायेम। यद्वा तदिति भर्गोविशेषणम्, सवितुर्देवस्य तत्तादृशं भर्गोधीमहि " किंतदित्यपेक्षायामाह—यद्विति लिङ्गव्यत्ययः, यद्भर्गोधियः प्रचोदयादिति तद्ध्यायेमेति समन्वयः। यद्वा तदिति भर्गोविशेषणं, सवितु र्देवस्य तत्तादृशं भर्गो धीमहि किंतदपेक्षायामाह यद्भर्गोधियः प्रचोदयात् इति तद्ध्यायेमेति समन्वयः, यद्वा यः सवितासूर्यः धियः कर्माणि प्रचोदयात् प्रेरयति, तस्य सवितुः सर्वस्यप्रसवितुर्देवस्यद्योतमानस्य सूर्यस्य तत्सर्वैर्दृश्यमानतया प्रसिद्धं वरेण्यं सर्वैः संभजनीयंभर्गः पापानांतापकं तेजोमण्डलं धीमहि ध्येयतया मनसा धारयेम। यद्वा "भर्गः" शब्देनान्नमभिधीयते, य सवितादेवोधियः प्रचोदयति, तस्यप्रसादाद्भर्गोऽन्नादिलक्षणंफलंधीमहि धारयामः तस्याधारभूता भवेमेत्यर्थः

अस्यमन्त्रस्य शाङ्करभाष्यम्। अथ सर्वदेवात्मनः सर्वशक्तेः सर्वावभासकतेजोमयस्यपरमात्मनः सर्वात्मकत्वद्योतनार्थं सर्वात्मकत्वप्रतिपादकगायत्री महामन्त्रस्योपासनप्रकारः प्रकाश्यते—तत्र गायत्रीप्रणवादिसप्तव्याहृत्युपेता शिरःसमेता सर्ववेदसारमितिवदन्ति। एवंविशिष्टा गायत्री प्राणायामैरुपास्या, सप्रणवव्याहृतित्रयोपेता प्रणवान्ता गायत्री जपादिभिरुपास्या, तत्रशुद्धगायत्री प्रत्यग्ब्रह्मैक्यबोधिका धियोयोनः प्रचोदयादिति, नोऽस्माकंविशेषबुद्धीः यः प्रचोदयात् प्रेरयेत् इति सर्वबुद्धिसंज्ञान्तःकरणप्रकाशकः सर्वसाक्षी प्रत्यगात्मेत्युच्यते, तस्य प्रचोदयाच्छब्दनिर्दिष्टस्यात्मनः स्वरूपभूतंपरंब्रह्म तत्सवितुरित्यादिपदैर्निर्दिश्यते, तत्र ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः इति तच्छब्देन प्रत्यग्भूतं स्वतः सिद्धं परंब्रह्मोच्यते, सवितुरिति सृष्टिस्थितिलयलक्षणकस्य सर्वप्रपञ्चस्य समस्तद्वैतविभ्रमस्याधिष्ठानं लक्ष्यते। वरेण्यमिति सर्ववरणीयं निरतिशयानन्दरूपम्।

र्गइत्याविद्यादिदोषभर्जनात्मकज्ञानैकविषयत्वम् । देवस्येति सर्वद्योतनात्मकाखण्डचिदेकरसम् । "सवितुर्देवस्य" इत्यत्र षष्ठयर्थो राहोः शिर इतिवदौपचारिकः, बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणं यन्मेस्वरूपं तत्सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिदात्मकं ब्रह्मेत्येवंधीमहिध्यायेम । एवं सति सद् ब्रह्मणा स्वविवर्तजडप्रपञ्चेन रज्जुसर्पन्यायेनापवादसामानाधिकरण्यरूपमेकत्वं सोऽहमितिन्यायेन सर्वसाक्षिप्रत्यगात्मनो ब्रह्मणासह तादात्म्यरूपमेकत्वं भवतीति सर्वात्मकब्रह्मबोधकोयं गायत्रीमन्त्रः संपद्यते । सप्तव्याहृतीनामयमर्थः—भूरिति सन्मात्रमुच्यते, भुव इति सर्वं भावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपमुच्यते, सुव्रियत इति व्युत्पत्त्या स्वरिति सुष्ठुसर्वैर्ध्रियमाणसुखस्वरूपमुच्यते। महइति महीयते पूज्यतइति व्युत्पत्त्या सर्वातिशयत्वमुच्यते। जनइति जनयतीतिजनः सकलकारणत्वमुच्यते। तपइति सर्वतेजोरूपत्वम्। सत्यमिति सर्वबाधरहितम्। एतदुक्तम्भवति—यश्लोके सद्रूपतदोंकारवाच्यंब्रह्मैव, आत्मनोऽस्य सचिद्रूपस्यभावादिति। अथ भूरादयः सर्वेलोका ओंकारवाच्यब्रह्मात्मकाः न तद्व्यतिरिक्तं किंचिदस्तीति। व्याहृतयोऽपि सर्वात्मकब्रह्मबोधिकाः, गायत्रीशिरसोऽप्ययमेवार्थः—आपइत्याप्नोतीतिव्युत्पत्त्या व्यापित्वमुच्यते. ज्योतिरितिप्रकाशरूपत्वम्, रसइतिसर्वातिशयत्वम्, अमृतमिति मरणादिसंसारनिर्मुक्तत्वम्, सर्वव्यापिसर्वप्रकाशकसर्वोत्कृष्टनित्यमुक्तमात्मरूपं सच्चिदानन्दात्मकं यदोंकारवाच्यं ब्रह्म तदहमस्मीति गायत्रीमन्त्रस्यार्थः। गुहाशयब्रह्मज्ञानेनाशनोऽहं कर्त्रैदमंशाएषमहाविद्धुंसत् ॥ विलीयतेनेदमहंभवानितिनकारस्तुविनिश्चयेऽत्र। यदस्ति यद्भाति तदात्मरूपं नान्यत्ततोभातिनचान्यदस्ति ॥ स्वभावसंवित्प्रविभाति केवला ग्राह्यंगृहीतेतिमृषैवकल्पना ॥ १० ॥ इतिश्रीमच्छंकरभगवत्कृतौ गायत्रीभाष्यं समाप्तम् ॥ ॐ तत्सत् ॥

अनुवाद—जो सविता देव हमारे कर्मोंको अथवा धर्म अर्थ काम और मोक्षविषयक बुद्धिको प्रेरणा करताहै, सकल श्रुतियोंमें प्रसिद्ध सर्वान्तर्यामि होनेसे नियन्ता, सचराचरविश्वकी सृष्टि करनेवाले देदीप्यमान परमेश्वरका आत्मभूत और सर्वोंका उपास्य और ज्ञेय होनेसे मननीय भजन करने योग्य, अज्ञान और तत्कार्यकानिवर्तक स्वयंज्योतिः परब्रह्मात्मक तेजको हम ( लोक ) ध्यानकरतेहैं, यानें "जो वह तेज हैसो मैं हुं, और जो मैं हुं सो वह तेज है" ऐसा अभेद चिन्तन करतेहैं. अथवा देदीप्यमान उत् सविता देवका वैसा तेजका

हम ध्यान करतेहैंकी जो तेज हमारी बुद्धिको धर्मार्थकाम और मोक्षमें तत्पर करे. अथवा जो सवितादेव बुद्धिको सुकृत के तरफ प्रेरणा करतेहैं, समस्त लोकोंका अपरोक्ष, और सर्वका भजनीय, पापोंको दूर करनेवाला, जगत्‌के उत्पादक श्री सूर्यके तेजोमण्डलका हमलोक चिन्तन करतेहैं. अथवा जो सवितादेव बुद्धिको प्रेरणा करताहै, उसकी कृपासें अन्नादिरूप भोगोंको हमलोक प्राप्त होतेहैं.

इसमन्त्रका शाङ्करभाष्य—अब सर्वदेवात्मक सर्व शक्तिमान् समग्रविषयोंका अस्ति भाति और प्रियरूपसे प्रकाशकरनेवाला तेजोमय परमेश्वरकी सर्वस्वरूपता द्योतनकरनेकेलिये सर्वात्मकताप्रतिपादक " गायत्री " महान् मन्त्रका उपासनाप्रकार प्रकाशित करतेहै—सकलवेदोंमें प्रणवादिक सप्तव्याहृति और "आपोज्योति" इत्यादि शिरःसहित केवल गायत्रीहीको सर्व वेदका साररूप विद्वान्‌लोक कहतेहैं, यानें शिरःसहित ॐकारपूर्वक व्याहृतिसप्तकसमेत गायत्रीमन्त्रही सिर्फ वेदोंमें सारभूतहै, इसलिये वह उपास्यहै. यह शुद्ध गायत्री प्रत्यग्ब्रह्मका बोध करानेवालीहै. (धियो योनः प्रचोदयात्) " हमारी बुद्धिको जो देव प्रेरणा करें " ऐसा कहनेसें सकलबुद्धिसंज्ञक अन्तःकरणका प्रकाशकरनेवाला सर्वका साक्षी प्रत्यगात्मा उपलक्षित होताहै । " प्रचोदयात् " शब्दनिर्दिष्ट जो आत्माका स्वरूप परब्रह्म सो " तत्सवितुः" इत्यादिपदोंसे उपलक्षित होताहै. इसमें " तत् " शब्दसें प्रत्यग्भूत स्वतःसिद्ध परब्रह्म अवगत होताहै. श्रीमद्भगवद्गीतामें कहाहैकी " ॐ तत्सत् " यह परब्रह्मका निर्देशहै, और वह तीनप्रकारका है. " सवितुः " इस पदसें उत्पत्तिस्थितिप्रलयवान् समग्रप्रपञ्चात्मक द्वैत भ्रमका अधिष्ठान उपलक्षित होताहै. " वरेण्यम् " इस पदसें सर्वोको प्राप्तकरने योग्य निर्विशेष आनन्द स्वरूप उपलक्षित होताहै. " भर्गः " इस पदसें अविद्यातत्कार्यका निवर्तक ज्ञानस्वरूप उपलक्षित होताहै. " देवस्य " इस पदसें सर्वका प्रकाशकरनेवाला एकरस अखण्ड चैतन्य उपलक्षित होताहै. यद्यपि इस मन्त्रमें " सविता देवका सर्वप्रकाशक तेज " ऐसा कहनेसे सवितासें तेजकी भिन्नता उपलब्ध होतीहै, क्योंकी जैसें " देवदत्तका कम्बल " ऐसा कहनेसे संबन्धप्रत्यायक षष्ठीविभक्ति के द्वारा देवदत्त और कम्बलका भेद स्फुट पाया जाताहै, वैसेंही " सविता देवका तेज" ऐसा कहनेंसेभी षष्ठीविभक्तिद्वारा भेदकी प्रतीति होनेसें यह मन्त्र भेदबोधक याने द्वैतप्रतिपादक हुवा ऐसा भ्रम होताहै, तथापि

यह षष्ठीविभक्तिका प्रयोग लौकिकव्यवहारानुसारसें कियाहै, नहिंकी पारमार्थिक भेद प्रतिपादन करनेंको, जैसे लोक कहतेंहैंकी "राहुका मस्तक" पुरुषका चैतन्य " शिलाका शरीर " राहु स्वयं मस्तकरूपहीहै। क्योंकी एक अपराधी असुरका, विष्णुने जब शिरश्छेद किया तब मस्तकका नाम राहु हुवा और कबन्ध (धड) का नाम केतु हुवा, जबकी मस्तकही राहुहै तब राहुका मस्तक कैसे हो सक्ता? तथापि लोक " राहुका मस्तक ऐसा कहा करतेंहै. याने राहु और मस्तकमें भेद न होने परभी बलात् भेद कल्पित करके व्यवहार होताहै. और जैसे " पुरुषका चैतन्य " पुरुष और चैतन्य भिन्न नहोनेपरभी कल्पित भेदसें व्यवहार होताहै। " शिलाकाशरीर " इसमेंभी शिला यही शरीराकारहै, शिला अन्य पदार्थ और शरीर अन्य पदार्थ ऐसा है नहिंतथापि औपचारिक भेदसें व्यवहार होताहै. तैसें ही "सविता देवका तेज" ऐसा भेद अवास्तविक (कल्पित) है, याने अधिष्ठानात्मक परब्रह्म स्वयं तेजःस्वरूपही है, तथापि भेददृष्टिवाले लोकोंको बोध करानेके लियें भेदसें मात्र व्यवहार कियाहै, याने औपचारिक ( कल्पित ) भेदसें वास्तविक अद्वैत बाधित हो सक्ता नहिं. ( प्रकृत प्रसंग कहतेंहै ) " देहादिबुद्धिपर्यन्त सकलदृश्यका साक्षी में समग्र कल्पितप्रपंचका अधिष्ठान समस्त अनर्थरहित स्वप्रकाश परमानन्द चैतन्यात्मक परब्रह्महीहु " ऐसा ध्यान करतेंहैं. " सकल प्रपंचका अधिष्ठान परब्रह्म मैंहीहु." ऐसा कहनेंसें ब्रह्मके साथ स्व ( ब्रह्मका ) विवर्त जडप्रपंचका बाधसामानाधिकरण्यरूप एकत्व सिद्ध होताहै. जैसें रज्जुरूप अधिष्ठानका सर्पकेसाथ अविद्याद्वारा एकत्वहै तैसेंही परब्रह्मका प्रपंचकेसाथ अज्ञानद्वारा अभेदहै. और जैसें " वहीयह देवदत्तहै " इस वाक्यमें देशकालादिक उपाधिका त्याग करके शुद्ध देवदत्तरूप देहेन्द्रियादिसंघातात्मक व्यक्तिका बोध होताहै तैसेंही सर्वज्ञत्वा सर्वशक्तिमत्वादिक ईशधर्म और अल्पज्ञतासुखित्वदुःखित्वादिक जीवधर्मका बाध करके " मैं प्रत्यगभिन्न निरतिशयानन्द चिदेकरस हु" ऐसा चिन्तन करनेंसें ब्रह्मात्मैक्य सिद्ध होताहै. " उस ऐक्यको बतलानेवाला यह गायत्रीमन्त्र होनेसें " सर्वात्मकताप्रतिपादक यह मन्त्रहै ऐसा कहाजाताहै. सात व्याहृतीयोंका यह अर्थ है—

" भूः " इस शब्दसें सन्मात्र यानें केवल सद्रूप कहाजाताहै.

" भुवः " इस शब्दसें सबको प्रकाशनेवाला शुद्ध चैतन्य कहाजाताहै.

"स्वः" इस शब्दसें सर्वको परमइष्ट निरतिशय सुखस्वरूप कहाजाताहै.

"महः" इस शब्दसें परमपूज्यत्वरूप अर्थ प्रतीतहोकर सर्वोत्कृष्ट पदार्थ कहाजाताहै.

"जनः" इस शब्दसें सर्वका उत्पादक यानें परमकारणरूप अर्थ कहाजाताहै.

"तपः" इस शब्दसें देदीप्यमानता याने नित्य तेजस्वितारूप अर्थ कहाजाताहै.

"सत्यम्" इस शब्दसें समग्रबाधरहित और निखिलबाधका अवधिरूप अर्थ कहाजाताहै.

इससें यह समझना चाहियेकी जो कुछ लोकमें सद्रूप है सो ॐकारका वाच्य ब्रह्महीहै. और जीवब्रह्मकी एकता प्रतिपादित होनेसें यह जीवात्माभी ब्रह्मरूप याने सच्चिदानन्द रूपहै. और यह "भू" आदि लोक (सप्तक) हैं सोभी ॐकारवाच्य परब्रह्मात्मकहीहै, उस (ब्रह्म) सें भिन्न नहि हैं. सकल व्याहृतियाँभी सर्वात्मकब्रह्मकी बोधकहैं. गायत्रीके शिरः "आपोज्योतिः" इत्यादिकाभी यही अर्थ होताहै—"आपः" कहनेसें व्यापक पदार्थ कहाजाता है, आकाशकोभी लोक व्यापक कहेतेहै. इससें अतिव्याप्तिके परिहारार्थ कहते हैंकी "ज्योतिः" सकल जडवर्गका प्रकाशक, याने आकाश स्वयं यथाकथंचि-व्यापकहोनेपरभी प्रकाशक न होनेसें वह इसमन्त्रका लक्ष्य (उपास्य) नहि है. "रसः" कहनेसें सर्वातिशयतारूप अर्थ प्रकट करतेहैं. "अमृतम्" कहनेसें जन्ममरणादिसंसारसें निर्मुक्त कहाजाताहै. इस मन्त्रका समुदित अर्थ ऐसा होता है "सर्वव्यापक, सर्वप्रकाशक, सर्वोत्कृष्ट, नित्यमुक्त, सच्चिदानन्दात्मक ॐकारवाच्य परब्रह्म परमात्मा सो में हीहुं". गुहागत पदार्थ जैसे गुप्त होताहै तैसें यह ब्रह्मस्वरूपभी अज्ञलोकोंसें गुप्त है इसलिये गुहागत इस ब्रह्मरूप हुताशन (अग्नि) में इस सचराचर प्रपंचका होम (विलय) करके यानें कल्पित भेदोंका बाधपूर्वक, अधिष्ठानसाक्षात्कारद्वारा में (जीवात्मा) स्व (परब्रह्म) स्वरूपसें, अभिन्न याने तद्रूप हो जाउं, जो नित्य, चैतन्य है और स्वयं प्रकाशितहोकर जडवर्गको प्रकाशित करताहै सो आत्मस्वरूपहीहै. उस (आत्मस्वरूप) को छोडकर अन्य पदार्थ हैभी नहि और प्रकाशकसकाभी नहि. नित्य ज्ञानरूप चित्कला, की जो सद्रूपेण सर्वत्र अनुस्यूत है, वही यथार्थहै. और जो "मायागृहीता" इत्यादिक

कल्पनाहै सो इस व्यवहारान्तर्गतहोनेसे मिथ्याहै. इतिश्रीमच्छङ्कराचार्य भगवान्का गायत्री भाष्यका अनुवाद संपूर्ण ॥ १० ॥

१६. ३ ५ २५ अयंपन्थाअनुवित्तःपुराणोयतोदेवाउदजायन्तविश्वे ।
अतश्चिदाजनिषीष्टप्रवृद्धोमामातरममुयापत्तवेकः ॥ १ ॥

गर्भस्थो ज्ञानसंपन्नो वामदेवो महामुनिः मसिचकेनजायययोनिदे
शाद्युमातृतः ॥ १ ॥
किंतुपार्श्वादितश्चेतिज्ञात्वानुजननीविदम् दध्यौशांत्यैशचीदेवी
मदितिं त्विन्द्रमातरम् ॥ २ ॥
अदितिस्त्विन्द्रसहिता, गर्भिणीमभ्यगाद्वने अदितीन्द्रवामदेवाः
संवादमथचक्रिरे ॥ ३ ॥
इत्याद्युक्त्यातेषांसंवादभूता इमा ऋचः —

पुराणः अनादिः अयंप्रत्यक्षेणोपलभ्यमानः पन्था योनिनिर्गमनरूपोमार्गः अनु आनुपूर्व्येण वित्तः सर्वैर्जायमानैर्लब्धः, यतो यस्माद्योनिमार्गात् विश्वेसर्वेदेवाउदजायन्त उत्कर्षेणोत्पन्ना भवन्ति तस्माद्योनिमार्गान्मनुष्याउत्पन्ना भवन्तीति किमुवक्तव्यम्, अतश्चिदस्माद्योनिमार्गादेवप्रवृद्धः गर्भप्रकर्षेण वृद्धिंगतो वामदेवः आजनिषीष्ट आसमन्ताज्जायतां अमुयाअमुंमातरंपत्तवेपतनाय मरणायइत्यर्थः माकः माकरोतु ॥ १ ॥

अनुवाद—वेदान्तसिद्धान्तमें पूर्ण अपरोक्ष अनुभव करनेवाले जैसे वसिष्ठव्यासादिकहैं तैसे एक "वामदेव" भीहैं, जिनोंनें गर्भमें स्थिति होनेपरभी ज्ञान संपादनकरके अपना सार्वात्म्यभाव "अहंमनुरभवंसूर्यश्च" इत्यादिकमन्त्रोंमें बतलायाहै, उन् वामदेवकी संक्षिप्त कथा कहतेहैं, "गर्भमें रहनेवाले वामदेव महामुनि ज्ञान संपादनकरके "माताके योनि प्रदेशसें मैं बहार नहि निकलुंगा किंतु पार्श्वभाग (कुक्षि) का विदारण करके मैं बहार आउं।" ऐसा विचार करने लगे, जब माता "शची" नें इस विचारको समझकर अपनें दुःखको दूर करनेंकेलिये इन्द्रकी माता आदितिका ध्यान कीया तब अदितिभी अपनें पुत्र इन्द्रको साथलेकर उस जंगल्में आपहुंची की जहां सगर्भा "शची" शोकातुर होकर बैठीथी, वहांपर आकर आदिति इन्द्र वामदेव परस्पर प्रश्नोत्तरात्मक संवाद करनेंलगे, ऐसी आख्यायिका है वह ऋचासें कहते है.

यह योनिद्वार-बहार आनेका प्रत्यक्ष उपलब्ध होनेवाला जो अनादि मार्ग है उसी मार्गसें सब देव भी बहार आते है तो मनुष्योंके लिये क्याकहना! इसलिये बृद्धिको पायेभये अथवा ज्ञानीबनेहुवेभी वामदेव इसी योनिमार्गहीसें बहार निकलें जिससें भिचारी इस माताके मरणमें निमित्त (स्वयं) न बनें ॥१॥

२७. ३ ५ २५ नाहमतोनिरयादुर्गहै तत्तिरश्चतापार्श्वान्निर्गमाणि।
बहूनिमेअकृताकर्त्वानियुध्यैत्वेनसंत्वेनपृच्छै ॥ २ ॥

वामदेव एवमुक्तवन्तमिन्द्रं प्रत्याह--अहमतो योनिमार्गान्न निरय न निरयाणि ननिर्गच्छानि, एतद्योनिनिर्गमनरूपंवर्त्म दुर्गहा दुर्गहं दुःखेन प्राप्यं नमाप्यं भवतीत्यर्थः, किंतु तिरश्चता तिरश्चीनात्पार्श्वात् निर्गमानि निर्गच्छानि, योनिदेशादनिर्गतोहं पार्श्वंभित्वा निर्गच्छानीत्यर्थः, अन्यैरकृतानि इमेवनकेवलंमयाक्रियते किन्तु अन्यैरकृता अकृतानि बहूनिकर्माणि मे कर्त्वानि कर्तव्यानिसन्ति त्वेन एकेनसपत्नेन विवदमानेन सहयुध्यै युद्धंकरवाणि. त्वेन एकेनबुभुत्सुना संपृच्छै सम्यक् पृच्छानि ॥ २ ॥

अनुवाद--पूर्वोक्त प्रकारसें कहनेवाले इन्द्रदेवको वामदेव उत्तर कहने लगे--मैं इस् योनिमार्गकेद्वारा बहार निकलुंगा नहि, क्योंकी योनिनिर्गमनरूप यह मार्ग दुर्गमहै दुःखदहै, परंतु तिर्यग्भाग याने पार्श्वदेशको विदारणकरके बहार निकलुंगा. अनन्य साधारण याने दूसरोंसे नहि होनेवाले इस एकही कार्य को मैं करताहुं ऐसा नहि किंतु औरभी वैसे कार्य मुझे बहुत कर्तव्यहैं. जैसे एक सपत्न ( प्रतिपक्षी ) वादीके साथ मैं वादात्मक युद्ध करुंगा और एक ज्ञातासें-भीमैं ( अनन्य साधारण ) प्रश्न पुछुंगा. ॥ २ ॥

२८. ३ ५ २५ परायतींमातरमन्वचष्टननानुगान्यनुनुगमानि।
त्वष्टुर्गृहे अपिबत्सोममिन्द्रःशतधन्यंचम्वोःसुतस्य ॥३॥

मयिगर्भस्थेसति इन्द्रः मदीयांमातरंपरायतीं परेतांम्रियमाणामन्वचष्ट अन्वब्रवीत्, एवमपीदानीं गर्भस्थितोहं पुराणंपन्थानं नानुगानि नानुगच्छानीति न किंतु क्षिप्रमनुगमानि अनुगच्छान्येव ॥ ३ ॥

अनुवाद–इन्द्र जब मेरे तिर्यगमनसे माताके मरणकी सूचना करतेहै तो गर्भस्थित मैं प्राचीनमार्ग योनिद्वारा निर्गमनको क्या नहि अनुसरुंगा? किंतु अवश्य सत्वर अनुसरण करताहुं, यानें मेरी माताके मरणमें मैं निमित्त नहि होउंगा. ॥ ३ ॥

२९. ३ ६ १५ अहंमनुरभवं सूर्यश्चाहंकक्षीवाँऋषिरस्मिविप्रः ।
अहंकुत्संमार्जुनेयन्यृंजेहंकविरुशनापश्यतामा ॥ १ ॥

इदमादिमन्त्रत्रये अयंगर्भेवसन्वामदेव- उत्पन्नतत्त्वज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्वादिरूपेण प्रदर्शयन्नाह–अहंवामदेव. मनुरभवं सर्वस्य मन्ता प्रजापतिरस्मि, अहमेव सूर्यश्च सर्वस्यप्रेरक सविताचास्मि, विप्रो मेधावी कक्षीवान्दीर्घतमसः पुत्रः एतत्संज्ञक ऋषिरप्यहमेवास्मि, आर्जुनेयं आर्जुन्याः पुत्रः कुत्समेतन्नामक ऋषिमहमेवन्यृंजे नितरां प्रसाधयामि, कवि क्रान्तदर्शी उशना एतदाख्य ऋषिरहमेवास्मि, उक्त मुपलक्षणं, परमार्थदृष्ट्या कृत्स्नमप्यहमेवाहमीत्यर्थः । हेजनाः मा सर्वात्मकं पश्यत यूयमप्येवमेव स्वरूपमनुभवतेत्युक्त भवति ॥ १ ॥

अनुवाद–गर्भस्थित यह वामदेव तत्त्वज्ञान उदित होनेसें सर्वात्मतारूप अपने अनुभवको मन्वादिरूपसें बतलाते हुवे कहने लगे–मैं ( वामदेव ) सबका प्रजापति हु और मैंही सबका प्रेरक और प्रकाशक हुं. मेधा (बुद्धि) रूप उपाधिका स्वीकार करके विप्र शब्दका वाच्यमैंही बनाहुं. दीर्घतमा नामक ऋषिका पुत्र कक्षीवान् नामक ऋषिभी मैं हीहु. आर्जुनीका पुत्र कुत्स नामक ऋषिको मैंही सिद्ध करताहुं. अतिक्रान्त यानें भूतभविष्यादिकको जानने वाले उशना (भृगु) नामक ऋषिभी मैंहीहुं, (यह सब उपलक्षण है) पारमार्थिक दृष्टिसें विचार करनेपर सकल प्रपञ्चभी मैंही हुं. हे लोकों! मैं सर्वात्मक हुं ऐसा तुमलोक देखो, और तुमलोकभी इसी तरहका स्वरूप यानें सार्वात्म्यता संपादन करो ॥ १ ॥

३०. ३ ६ १५ अहंभूमिमददामार्यायाहंवृष्टिंदाशुषेमर्त्याय ।
अहमपोअनयंवावशानाममदेवासोअनुकेतमायन् ॥ २ ॥

अहं वामदेव इन्द्रोवा आर्याय मनवे भूमिं पृथ्वीमददां दत्तवानस्मि, दाशुषेहविर्देचवते मर्त्याय मनुष्याय यजमानाय वृष्टिंसस्यायभिवृद्धयर्थं वृष्टिलक्षण

मुदकं अहमेव अददां, किंच अहं वावशानाः शब्दायमाना अपः उदकानि अनयं सर्वमाविष्प्रादेशमगमयं, देवासो वह्न्यादयोदेवाः ममकेतं मदीयं संकल्पं अन्वायन् अनुयन्ति ॥ २ ॥

अनुवाद–( एतदादिक मंत्रोंसे ज्ञानकी महत्ता बतलाते है ) वामदेव अथवा इन्द्रका लक्ष्यार्थभूत मैंने मनु ( प्रजापति ) को भूमि दीहै. और ( उसी ) मैंने हविष्यप्रदान करनेवाले यजमानात्मक मनुष्योंके लिये अन्नादिकओषधियोंकी वृद्धि होनेको वृष्ट्यात्मक जलभी दीयाहै. और शब्दायमान (शब्द करते) जलको अपने स्थान (समुद्रादिक)में पहुंचानेवाला मैंहीहुं. अग्नि, वरुण, यम, कुबेरादिक सब देव मेरे संकल्पानुसार आचरण ( वर्तन ) कररहेहैं. ॥ २ ॥

३१. ३ ६ १५ अहंपुरो मन्दसानोव्यैरं नवसाकन्नवतीः शंबरस्य ।

शततमंवेश्यं सर्वताताद्दिवोदासमतिथिग्वं यदावम् ॥ ३ ॥

अहं वामदेव इन्द्रोवा मन्दसानः सोमेन माद्यन् नव नवसंख्याका नवतीर्नवतिसंख्याकाश्च शंबरस्यैतन्नामकस्यासुरस्य संबन्धीनि पुरः पुराणि साकं युगपदेव व्यैरं अध्वंसयं शततमं शतसंख्यापूरणं पुरं वेश्यं दिवोदासनाम्ने प्रवेशार्हं अकरवं, सर्वताता सर्वतातौयज्ञे अतिथिग्वं अतिथीनामभिगन्तारं दिवोदासं दिवोदासनामकं राजर्षिं यद्यदा आवमपालयं तदा पुरो व्यैरमितिपूर्वेणसंबन्धः ॥ ३ ॥

अनुवाद–वामदेव अथवा इन्द्रका लक्ष्यार्थभूत मैं सोमरससे तृप्त होता हुवा ९९ नेन्यानवे दैत्योंके नगरोंका युगपत् ( साथही ) विध्वंसकरचुकाहु. और शततम याने १०० सौमे नगरमे दिवोदास नामके राजर्षिको प्रवेशयोग्य करचुकाहुं. जिस समय अतिथिके पालक उस् दिवोदासराजर्षिके रक्षणमें मैं तत्पर हुवाथा उस समय पूर्वोक्त नगरोंको विध्वंस करचुकाहुं ॥ ३ ॥

३२. ३ ६ १६ गर्भेनुसन्नन्वेषामवेदमहंदेवानांजनिमानिविश्वा ।

शतंमापुरआयसीररक्षन्नधश्येनोजवसानिरदीयम् ॥ १ ॥

अत्रैष श्लोकः पठ्यते–श्येनभावंसमास्थायगर्भोयोगेन निःसृतः ऋषिर्गर्भे शयानःसन् ब्रूते-गर्भेनुसन्निति ॥ १ ॥ गर्भेनु गर्भेएवसन् विद्यमानोऽहंवामदेवः एषा-

मिन्द्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदं मानुपूर्व्येणाज्ञासिषं, परमात्मनः सकाशात्सर्वेदेवाजाता इत्यवेदिषमित्यर्थः, इतः पूर्वं शतं बहूनि आयसीः अयोमयान्यभेद्यानि पुरः शरीराणि मा मामरक्षन् अपालयन् यथा हंशरीराद्व्यतिरिक्तमात्मानं न जानीयां तथामामरक्षन्नित्यर्थः, अधअधुना श्येनः श्येनवस्थितोहं जवसावेगेन निरदीयं शरीरान्निरगमं अनावरणमात्मानंजानन्निर्गतोस्मीत्यर्थः "पुरुषेहवा अयमादितोगर्भे" इति खंडे (ऐ. २-५) गर्भएवैतच्छयानो वामदेव एवमुवाचेत्यादिना अयमर्थः सम्यक्प्रतिपादितः॥१॥

अनुवाद–श्येन पक्षीकी तरह बहुत वेगसें योग मार्गका आश्रय करके वह वामदेव गर्भके बहारनिकलके कहतेभये—

मेरी गर्भमें स्थिति होने परभी इन इन्द्रादि देवोंके जन्मोंको में यथार्थ जानता था (हुं) यानें परमात्मरूपपरमकारणसें वे सब उत्पन्न हुवेहैं ऐसा में जानता था (हुं).

और इस गर्भवासके पहिले अनेकलोहमय अभेद्यशरीर मेरा रक्षण कर रहे थे, याने में देहेन्द्रियादि संघातसें अतिरिक्त आत्माको यथार्थ ज्ञान प्राप्त न करसकुं ऐसे में ममत्व और अहंताद्वारा लोहादिककी तरह कठिनतर दुर्भेद जो अविद्या (कारण) शरीरसें बद्ध होरहाथा, सो अब इस समय श्येनपक्षीकी तरह बडेवेगसें शरीरकोछोडकर बहारआयाहुं, यानें अविद्यासेंअनावृतआत्माको यथार्थ अवगतकरके बहारआयाहुं. ॥ १ ॥

३२. ३ ६ १६ नघासमाप्वजोषंजभाराभीमासस्त्वक्षसावीर्येण।

ईर्मापुरंधिरजहादरातीरुतवातॉअतरच्छूशुवानः ॥२ ॥

स गर्भःमां वामदेवं जोषं पर्याप्तं नघ नैवापजभार अपजहार गर्भेविवसतो मे मोहो माभूदित्यर्थः, अहंतु ईं इदंगर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येन अभ्यास अभ्यभवं, ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरांधारकः परमात्मा अरातीः गर्भसंस्थितान् शत्रूनजहात् अत्यजत् जघान, उतापिच शूशुवानः वर्धमानः परिपूर्णः परमात्मा वातान् गर्भक्लेशकरान्वायूनतरत् अतारीत् ॥२॥

अनुवाद—उस गर्भस्थितिनें मुझको (वामदेवको) स्वरूपसें भ्रष्ट किया नहि है, यानें में गर्भस्थ था तथापि "गर्भवास जनित दुःखवान् में हुं." ऐसा मोह मुझे हुवा नहिं. क्योंकी उस दुःखका तीक्ष्णवीर्यसें यानें ज्ञानसामर्थ्यसें अभिभव (पराभव) मैंने करादिया. सकळ देहका धारण करनेवाला (अधिष्ठानात्मक) परमात्माने गर्भमें (दुःखानुभवद्वारा प्राप्त होनेवाले मोहादि) शत्रुओंका नाश करके संग छोडादिया है. और इसी परमात्मानें स्वापरोक्षज्ञान संपादन कराके क्लेश समुद्रके पार मुझे पहुंचा दीया है. ॥ २ ॥

३१. ३ ७ १४ हंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतम् ॥ ५ ॥

अनया सौर्यर्चा "यएषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुरि"त्यादि (छां. १–६–६) श्रुत्योक्तो मण्डलाभिमानी देवोस्ति, यश्चसर्वप्राणि हृदि चिद्रूपः स्थितः परमात्मा, यच्च निरस्तसमस्तोपाधिकं परंब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते. हंसः हन्तिर्गत्यर्थः सर्वत्र सर्वदागन्ता योहंसोऽसावित्यादिश्रुत्युक्त प्रकारेणैकीकृत्योपास्यः, परमात्मंत्रप्रतिपाद्य आदित्यः सच शुचौदीप्ते द्युलोके सीदतीति शुचिषत्, "अथ यदतः परोदिवोज्योतिर्दीप्यते" इत्यादि (छां. ३-१३-७) श्रुतेः। अनेन द्युस्थान आदित्यः प्रतिपादितः, सएव मध्यस्थानो वायुरित्याह-वसुः सर्वस्य वासयितावायुः सचान्तरिक्षसत् अन्तरिक्षसंचारी, अथ तस्यैव क्षितिस्थान वैदिकाग्निरूपतामाह—होता देवानामाह्वाता होमनिष्पादकोवा, वेदिषत् वेद्यां गार्हपत्यादिरूपेणस्थितः, अतिथिरतिथिवत्सर्वदा पूज्योग्निः, दुरोणसत् दुरोणंगृहनाम तत्रपाकादिसाधनत्वेनस्थितः, अनेन लौकिकाग्न्यात्मत्वमुक्तं, नृषत् नृषुमनुष्येषुचैतन्यरूपेण सीदतीतिनृषत्, अनेन परमात्मरूपत्वमुक्तं, पुनरप्यादित्यात्मतामाह—वरसत् वरेवरणीये मंडले सीदतीति वरसत् आदित्यः "वरंवाएतत्सद्मनायस्मिन्नेषएतस्तपती" तिहिश्रूयते ( ऐ. ब्रा. ४–२० ), ऋतंसत्यं ब्रह्म यज्ञोवा तत्र सीदतीत्यृतसत् अग्निः, व्योमान्तरिक्षं तत्रसीदतीति व्योमसद्वायुः, इदानीमादित्यत्वोच्यते, अब्जाः उदकेषुजातः उदकमध्येस्वयं जायते, गोजाः गोषुरश्मिषुजातः, ऋतं सत्यं सर्वद्रष्टृत्वेन सत्याज्जातः, ब्रह्मसाविन्द्रादिवत्परोक्षो भवति, यद्वोदकेषु वैद्युतरूपेण वा वाडवरूपेणवाजातः, अद्रिजाः अद्रावुदयाचलेजातः. एवं महानुभाव

आदित्यः, ऋतं सत्यमबाध्यं सर्वाधिष्ठानं ब्रह्मतत्त्वं तद्रूपो ह्यसावेव आदित्यस्योक्त रूपत्वं "हंसः शुचिषदित्येषवैहंसः शुचिषदि"त्यादिना ब्राह्मणे समाम्नातम् ॥५॥

अनुवाद—"आदित्य के अन्तर्गत हिरण्यश्मश्रु हिरण्मय पुरुष जो दिख पडता है" इत्यादिक श्रुतिमें सूर्यमण्डलाभिमानी जो देव उपास्यतया निर्दिष्ट किये है, और सकल प्राणिके हृदयमें अनुस्यूत प्रत्यक्चैतनरूपसें जो परमात्मा अवस्थित है याने यह दोनों सोपाधिक है, और समस्त उपाधियोंसे रहित जो परब्रह्म है वह सब (तीनो) एकहीहै ऐसा इस (सौरी) ऋचासें प्रतिपादन करतेहै-(हंस) हमेशा सर्वत्र गमनवाला और देदीप्यमान द्युलोकमें प्रतीतहोनेवाला परमात्मप्रतिपादक मन्त्रका विषयभूत यह जो आदित्य यानें तदन्तर्गत मण्डलाभिमानी देव है "सो मेंहुं और में वह हैं" ऐसा अभेदद्वारा वह उपास्य है. "प्रपञ्चातीत और द्युलोकमें देदीप्यमान परमात्मा" इत्यादिक श्रुतिसें सूर्यमण्डलाभिमानी देवकी प्रतीति होती है.

वही देव पारमार्थिक रूपसें निरुपाधिक होनेपरभी जैसें मण्डलरूप उपाधिका स्वीकारकरके मण्डलाभिमानी हुवे है तैसें औरभी उपाधियोंका स्वीकारकरके तत्तदभिमानी बनें है, जैसें मध्य—अन्तरिक्षमें सचार करनेसें और सबको वासित करनेसें वह वायु कहा जाताहै इसी तरह वही देव भूमिमें अवस्थित होकर "होता" ,याने इतर देवोंको निमन्त्रित करनेवाला अथवा होम करनेवाला बनता है, और यज्ञकुण्डमें "गार्हपत्य" अग्निरूपसें वही स्थित होता है, की जो अग्नि अतिथिकीतरह परमपूज्य है, गृहादिकमेंभी पाकादि निर्वर्तक अग्नि वही बनता है, मनुष्योंमें अनुस्यूत चैतन्यरूपसें रहनेवाला परमात्माभी वही है, और वही परमात्मा जो अनुस्यूत चेतनात्मक है सो सूर्यमण्डलमेंभी (तदभिमानी बनकर) स्थित है "यह परम उत्तम स्थान निवास करने योग्य है की जिसमें यह (परमात्मा) निकट रहेकर प्रकाश कर रहा है" इस श्रुतिसें वह मण्डलात्मकस्थान इतरस्थानोंसें उत्कृष्ट होकर वरणीय यानें उपासनादिक उपायसें प्रापणीय अवश्य प्राप्त करनेयोग्य बतलाया गया है. और यह परमात्मा "ऋत" याने सत्यस्वरूप त्रिकालाबाधितपरब्रह्मस्वरूपका साक्षात्कारहोनेकेबाद उपलब्ध होनेसे तद्रूपही है. अथवा यज्ञमें रहनेवाला अग्निरूप है, अन्तरिक्षमें संचारकरनेवाला वायुभी यही है, और यही परमात्मा जलमें प्रकट होनेवाला

सूर्यभी है (सूर्यका जलसें प्रादुर्भाव और जलहीमें तिरोभाव होता है क्योंकी उदयके पहिले और अस्तके बाद सूर्य निम्नप्रदेश जोकी जलस्थान है, वहींपर तिरोहित हुवे ऐसा प्रतीत होता है ). और किरणरूपसें वर्तमानभी यही परमात्म देव है, सत्यरूपसें यही प्रतीत होता है, याने इन्द्रादि देवोंकी तरह यह देव परोक्ष न होकर सबको चेतनरूपसें अपरोक्ष होरहा है. अथवा जलमें (मेघादिकमें) बिजलीरूपसें रहनेवाला अथवा जलात्मक समुद्रमें वाडवाग्निरूपभी यही है. अद्रिमें उदयाचलमें प्रकट होनेवाला यही सूर्यमण्डलान्तर्गत तदभिमानी देव सर्वस्वरूप है. यानें वही सब बनाहुवा उससे अतिरिक्त कुछभी नहिं है क्योंकी सर्वाधिष्ठान रूप जो परब्रह्म है वही सर्वस्वरूपसें प्रतीत होता है, तो अर्थात् सकल प्राणिके हृदयान्तर्गत अनुस्यूत चैतन्य और मण्डलाभिमानी देव और परब्रह्म परमात्मा जो निरुपाधिकहै सो सोपाधिकनिरुपाधिक सब चेतन उपाधियोंका बाध करनेसें एकही है. ॥ ५ ॥

३५. ४ ५ ११ नाहंतन्तुंनविजानाम्योतुंनयंवयन्तिसमरेतमानाः ।
कस्यस्वित्पुत्रइहवक्त्वानिपरोवदात्यवरेणपित्रा ॥ २ ॥

रूपकतया जगत्स्रष्टेर्दुर्ज्ञानत्वमनया प्रतिपादयतीत्यात्मविदोमन्यन्ते, तन्तुं तन्तून् तन्तुस्थानानि सूक्ष्माणि वियदादीन्यपञ्चीकृतानिभूतानि न विजानामि, ओतुं ओतून् पञ्चीकृतानि स्थूलानि ओतुस्थानीयान्यपिवियदादीनि न विजानामि, नच तत्कार्थं पटस्थानीयं प्रपंचं विजानामि, यं प्रपंचं समरे तंतूनामोतूनां च संगमने अतमानाः सततंचेष्टमानाः संसारिणः वयन्ति उत्पादयन्ति, तेषां भोगार्थमीश्वरः सृजतीति कर्तृत्वमुपचर्यते, इहास्मिन्विषये परः परस्ताद्बुद्धेरविषये वर्तमानानि वक्त्वानि वक्तव्यानि इमानि अवरेण अर्वाचीनेन सृष्ट्युत्तरकालभुवत्वेन पित्रा स्वजनकेन अनुशिष्टः सन् कस्यखलुपुत्रः वदाति वदेत् स्वोत्पत्तेः प्राचीनं वृत्तान्तं अजानानः, कश्चिदपिनवदेत् इत्यर्थः ॥ २ ॥

अनुवाद-तन्तु और वस्त्रका रूपक बताकरके "जगत्सृष्टि दुर्ज्ञेयहै" ऐसा इसमन्त्रसें प्रतिपादन करते हैं.

तन्तुस्थानापन्न सूक्ष्म जो अपञ्चीकृत आकाशादिक महाभूत है उनको मैं नहि जानता, और ओतुस्थानापन्न पञ्चीकृत पञ्चमहाभूतोंकोभी मैं नहि जानता,

सूक्ष्म और स्थूल भूतोंको (कारणको) जब मैं नहि जानता तब इनके कार्यरूपं वस्त्रस्थानापन्न प्रपञ्चको मैं कैसे जानुं ? जिस प्रपञ्चको उत्पन्नकरनेकेलिये तन्तु और ओतुका (तुरीवेमादि पटकार्यके साधनकी तरह विषय बनाकर) संगम याने ग्रथन करनेको निरन्तर संसारिलोक तत्पर होरहें है. प्राणिमात्रके उपभोगार्थ परमेश्वरही प्रपञ्चोत्पत्ति करता है ऐसा व्यपदेश किया जाताहै, बुद्धिके अविषयरूप इन् सूक्ष्म और स्थूल महाभूतोंको, उन् भूतोंके बाद होनेवाला प्राणी अपने पितृपितामहादिकसें शिक्षणपानेपरभी कौन जान सक्ता ? और कौन कहे सक्ता ? क्योंकी कोइभी लोक अपनी उत्पत्तिसें प्राचीन पदार्थोंके व्यापारका यथार्थरीतिसें अपरोक्षानुभवकरनेको योग्य है ही नहि, तो इस् सकल प्रपंच के कारणभूत सूक्ष्म और स्थूल भूतोंको भौतिक सृष्टिके अन्तर्गत कौन प्राणी जान सक्ताहै ? इससें भूत भौतिक सृष्टिकी दुर्ज्ञेयता बताकर जिसमें वह भूत भौतिक सृष्ट्यात्मक प्रपंच ओतप्रोत है उस् परमकारणभूत परमेश्वरकी परम दुर्ज्ञेयता अर्थात् सिद्ध होतीहै. ॥ २ ॥

२६. ४ ५ ११ सइत्तन्तुंसविजानात्योतुंसवक्त्वान्यृतुथावदाति।
यईचिकेतदमृतस्यगोपाअवश्चरन्परोअन्येनपश्यन् ॥ ३ ॥

सइत् सएव तन्तुं तन्तुस्थानीयानि सूक्ष्मभूतानि विजानाति नान्यः कश्चित्, तथा ओतुं ओतुस्थानीयानिस्थूलभूतानिच सएव विजानाति, सएववक्त्वानि वक्तव्यान्युपदेष्टव्यानि, इमानि ऋतुथा कालेकाले यदायदाविद्यासंप्रदायोच्छेदः तदातदा वदाति वदेत्, कोसौ योविजानीयात् वदेद्वेत्यतआह, योवैश्वानरः विश्वनरात्मकः परमात्मा अमृतस्य अमृतत्वस्य विमोक्षणस्य गोपाः रक्षिता अवः अवस्तात् संसारदशायाञ्चरन् अन्तःकरणोपेतोजीवात्मभावेनसंचरन् परः परस्तादविद्यायाः ऊर्ध्वं वर्तमानेनान्येन उक्तविलक्षणेन निरुपाधिकेन सच्चिदादिलक्षणेनरूपेण पश्यन् सर्वं जगत्प्रकाशयन् ईं इमानिचिकेतज्जानाति, तथाच परमात्मानंप्रकृत्य श्रूयते–(कठ. २-२-१५) "तमेवभान्तमनुभाति सर्वंतस्यभासासर्वमिदंविभाति" ॥३॥

अनुवाद–यद्यपि पूर्वमन्त्रोक्तप्रकारसें भूतभौतिक समुदाय दुर्ज्ञेयहै तथापि उसको जाननेवाला "वैश्वानर" पदवाच्य कोइ है ऐसा इस मन्त्रसें प्रतिपादन करते है.

तन्तुस्थानापन्न सूक्ष्मभूतोंको और ओतुस्थानापन्न स्थूल महाभूतोंको वहीजान सक्ता है, और जिस जिस समयमें (ब्रह्म)विद्यासंप्रदायका उच्छेद होता है उसका जीर्णोद्धार करके वही लोकोंको फिरसें स्वकार्य तत्पर करता है की जो "वैश्वानर" पदवाच्य है याने जो परमात्मा विश्वनर समग्र प्रपञ्चसें अभिन्नहोकर सर्वानुस्यूत प्रत्यक्‌चेतनस्वरूप है, और अमृतत्वका रक्षक है, यानें अपनें कृपापात्रोंको जो परमेश्वर मुक्तिप्रद यानें सार्वात्म्यभाव अर्पण करता है, और स्वयं संसार दशामें अन्तःकरणोपहित चेतन "जीव" भावसें संचरण करता है, और अविद्यासें पर वर्तमान सच्चिदानन्दात्मक निरुपाधिक स्वरूपसें सचराचर प्रपञ्चको जो परमात्मा प्रकाशता है वही इस भूतभौतिक सृष्टिको जानता है, "उस परमेश्वरका सामान्य बोध होनेके बाद दूसरे पदार्थोंका बोध होता है और उसीके नित्यप्रकाशसें सब प्रपञ्च प्रकाशित होता है" इत्यादिक कठोपनिषत्‌की श्रुतिभी इस अर्थसें संगत होती है. ॥ २ ॥

२७. ४ ५ ११ ध्रुवंज्योतिर्निहितंदृशयेकंमनोजविष्ठंपतयत्स्वन्तः ।

विश्वेदेवाःसमनसःसकेताएकंक्रतुमभिवियन्तिसाधु ॥५॥

पतयत्सु गच्छत्सु प्राणिष्वन्तर्मध्ये हृदये मनोजविष्ठं मनसोप्यतिशयेन वेगयुक्तं ध्रुवं निश्चलं निर्विकल्पं, तथाच वाजसनेयकं "अनेजदेकं मनसोजवीय" इति (ई. उ. ४)। ज्योतिः ब्रह्म चैतन्यं निहितं नकेनचित् स्थापितं "योवेदनिहितं गुहायां परमेव्योमन्निति" हि श्रूयते। किमर्थं दृशये दर्शनार्थं ज्ञानेनहि सर्वंजानन्ति, अपिच दीव्यन्तीति देवाइन्द्रियाणि विश्वे सर्वेदेवाः सर्वाणीन्द्रियाणि चक्षुराद्याः समनसः मनसा सहवर्तमानाः सकेताः सतेजस्काः सन्तः एकमद्वितीयं क्रतुं सृष्ट्यादीनां कर्मणां कर्तारं विश्वनरात्मकं परमात्मानम् अभिलक्ष्य साधु सम्यक् वियन्ति विविधं गच्छन्ति देवाएववा इमं अभिवियन्ति आभिमुख्येन विविधमुपयन्ति उपासत इत्यर्थः, तथाचश्रूयते "तद्देवाज्योतिषांज्योतिरायुर्होपासतेमृतमिति" ॥५॥

अनुवाद—यही "वैश्वानरात्मक" ज्योति जंगम—चलनेवालेप्राणियोंके हृदयोंमें रहेकर मनसेंभी अत्यन्त वेगवाला है, और निरुपाधिकरूपसेंतो निश्चल है—निर्विकल्प है, "यह परमात्मस्वरूप एक ज्योति निश्चल है और मनसेंभी वेगवत्तर है" इत्यादिक श्रुतिभी "निरुपाधिक रूपसें निश्चल और सोपाधिकरूपसें

वेगवत्तर है "इत्यादिक बतलाती है. यह परमात्मज्योति यानें ब्रह्मचैतन्य हृदयरूप गुहामें निश्चलस्वरूपसें स्वयमवस्थित है, किसीनें वहांपर स्थापित किया नहि, श्रुतिभी कहती है " हृदयरूप गुहामें रहे हुवे इस ब्रह्मचैतन्यको जो जानताहै", इत्यादि। और यह ब्रह्मचैतन्य ज्ञानके लिये हृदयावस्थित हुवा है यद्यपि सर्वत्र अवस्थित है परंतु हृदयहीमें उपलब्धि होनेंमें " हृदयावस्थित है " ऐसा कहा जाता है। और सब चक्षुरादिकइन्द्रियाँ मनके साथ वर्तमान होकरके भेदत्रयशून्य और प्रपञ्चके निर्माणकरनेवाले इस परमात्माके चैतन्यात्मक प्रकाशको ग्रहण करके अनेक प्रकारका व्यवहार कर रहीं है, अथवा देवतालोक जिस परमेश्वरकी अनेक प्रकारसें उपासना कर रहें हैं, श्रुतिभी कहती है "देवतालोक सूर्यचन्द्रादिक ज्योतिकाभी नियामक जिस परमज्योतीरूप परमेश्वरकी उपासना कर रहें है अधिक आयुष्य और अमृत (मुक्ति) प्राप्त करनेके लिये" इत्यादि ॥ ५॥

३८. ४ ७ ३३ रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय।
इन्द्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादश ॥१८॥

'इदिपरमैश्वर्ये इत्यस्यधातो रर्थानुगमादिन्द्रः परमात्मा सचाकाशवत् सर्वगतः सदानन्दरूपः सएवोपाधिभिरन्तःकरणैः प्रतिशरीरमवच्छिन्नः सन् जीवात्मेति व्यपदिश्यते, सएव अनादिमायाशक्तिभिः वियदादिजगदात्मना विवर्तते, शब्दादिविषयहरणशीलाः इन्द्रियवृत्तयश्चतेनैव संबद्धाः, एतत्सर्वेतस्य परमात्मनोयद्वास्तवरूपं तस्यदर्शनायेतिअयमर्थोऽनयाप्रतिपाद्यते–रूपंरूपं रूप्यत-इतिरूपं शरीरादि प्रतिशरीरंचिद्रूपः सर्वगतः परमात्मा प्रतिरूपः प्रतिबिंबरूपः सन् सर्वाणिशरीराणिबभूव प्राप्नोत्, तच्चप्राप्तं प्रतिबिंबरूपं अस्य परमात्मनः प्रतिचक्षणाय प्रतिनियताकारस्य दर्शनायभवति, सचेन्द्रः परमेश्वरः मायाभिर्मायाशक्तिभिः पुरुरूपः वियदादिभिर्बहुविधरूपैरुपेतः सन्नीयतेचेष्टते, एतदपि अस्यपरमात्मनः प्रतिचक्षणायभवति, अस्यचदशशता सहस्रसंख्याका हरयः इन्द्रियवृत्तयः युक्ताः विषयग्रहणायोद्युक्ताः सन्ति, तदपि अस्य वास्तवरूपस्य दर्शनायभवतिइति, एवं स्थूलसूक्ष्मशरीरयोर्वियदादिमहाप्रपंचस्यच तत्त्वज्ञानहेतुत्वमनया प्रत्यपादीति।१८।

अनुवाद–परमात्मा ही आकाशकी तरह सर्वव्यापक सद्रूप आनन्दरूप होतेहुवेभी अन्तःकरणरूप उपाधिके संबन्धसें प्रत्येक शरीरोंसें अवच्छिन्न (युक्त)

"ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवोज्यायानेभ्यो लोकेभ्य" इति श्रुतेः" (बृहदारण्यक) ॥ ५ ॥

अनुवाद–हे परमात्मन्! आपके प्रतिमान-परिच्छेदके लिये सेंकडो द्युलोक हो तोभी आपको परिच्छिन्न करसके नहिं. और आपके स्वरूपके प्रतिबिंबकेलिये सेंकडो भूलोक हो तोभी आपको व्याप्त करसकें नहिं. दुराचारियोंके नाशार्थ और साधुपुरुषोंके रक्षणार्थ इन्द्रादिस्वरूपको धारण करके वज्रादिशस्त्रको धारणकरनेवाले हे परमात्मन्! आपको असंख्य सूर्यभी प्रकाशित नहिं करसकें, कठवल्लीमें कहाहैकी–"उस् परमेश्वरको सूर्य चंन्द्र तारा विजलि अग्नि इत्यादिक प्रकाश करसकें नहिं." विशेष क्या कहें उत्पन्न हुवे जितने तत्त्व हैं उनमेंसे कोइभी आपको प्रकाशित नहिं करसक्ता परंतु आपके प्रकाशसें वे प्रकाशित होतेहै. द्युलोक भूलोक और तदन्तर्गतदेवमनुष्यादिक कोइभी आपको विषय करसक्ता नहिं, यानें आप सर्वोत्कृष्ट होनेसें सर्वातिरिक्तहीहैं, "पृथिवीसें अन्तरिक्षसें द्युलोकसें और इतर लोकोंसेंभी यह आत्मतत्त्व परम ज्येष्ठहै, श्रेष्ठ है" इत्यादिक बृहदारण्यक उपनिषदमेंभी कहाहै ॥ ५ ॥

४०. ७ ५ २७ यत्रज्योतिरजस्रंयस्मिँल्लोकेस्वर्हितम् ।

तस्मिन्मांधेहिपवमानामृतेलोकेअक्षितइन्द्रायेन्दोपरिस्रव ॥७ ॥

हे पवमान यत्र यस्मिन्लोके ज्योतिः सर्वतेजः अजस्रं सर्वदा अविनश्वरं वर्तते। यस्मिंश्चलोके स्वरादित्याख्यं ज्योतिर्हितं निहितमस्ति तस्मिन् अमृते मरणधर्मरहिते अतएव अक्षिते अक्षीणलोके मां सोमाभिषवं कुर्वन्तं धेहि तस्मान्मामुत्तमलोकं प्रापयितुं त्वमिन्द्रायपरिस्रव ॥ ७ ॥

अनुवाद–हे पवमान! जिस् लोकमें समग्रतेज सदा अविनाशिरूपसें अवस्थितहै, और जिस्लोकमें आदित्यात्मक तेजभी निहितकियागयाहै, यानें जिस् लोकमें सूर्यभी तेजस्विताको पाये हुवेहैं, ऐसे मरणादिधर्मरहित अविनाशी लोकमें सोमाभिषवण करते हुवे मुझको तुम् पहुंचा देओ. यानें उत्तम लोक, की जहांसें वापसआना नहिं होता वैसें लोकमें मुझे पहुचानेको तुम् इन्द्रके लक्ष्यार्थभूत परमेश्वरकी प्रार्थना करो ॥ ७ ॥

४१. ७ ५ २७ यत्रानन्दाश्चमोदाश्चमुदःप्रमुदआसते।
कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव॥११॥

यत्र यस्मिन् लोके आनन्दादय आसते, तेषामल्पोभेदोद्रष्टव्यः, यत्रलोके कामस्य काम्यमानस्य देवस्य सर्वेकामा आप्ताः प्राप्ताभवन्ति, तत्रमाममृतं कृधि एतत्तु त्वयाविना नघटत इति हे सोम त्वं परिस्रव ॥ ११ ॥

अनुवाद–जिस् लोकमें आनन्दप्रमोदहर्षादिक सततनिवास करते हैं, और जिस लोकमें देवोंकेभी सकल मनोरथ पूर्ण होतेहैं, वहांपर मुझे अमृतस्वरूपसें याने जन्ममरणादिविकाररहित स्वरूपसें तुम् स्थापित करो, यह कार्य तुमारे सिवाय बननेकानहिं, इसी लिये हे सोम? तुम इन्द्रके लक्ष्यार्थभूत परमेश्वरको प्राप्त हो ॥ ११ ॥

४२. ७ ५ ३३ असच्चसच्चपरमेव्योमन्दक्षस्यजन्मन्नदितेरुपस्थे।
अग्निर्हनः प्रथमजाऋतस्यपूर्वआयुनिवृषभश्चधेनुः ॥७॥

असदव्याकृतं सच्चव्याकृतं " असदेवेदमग्रआसीत् " ( छां ६-२-१ ) " तत्सदासीत् तत्समभवत् " इतिश्रुतेः । सदसदात्मकं जगत्सर्वं परमेउत्तमेज्ञानसहिते व्योमन् व्योमनि कारणात्मनि जातमभूत्तदा अदितेः पृथिव्याउपस्थे उत्स्थाने समीपे दक्षस्य प्रजापतेः यद्वा दक्षस्य " सर्वधात्मानं विभजतादित्यंतृतीयंवायुं तृतीयमि " तिश्रुतेः । तृतीयस्य द्युलोकस्याधिष्ठातृत्वादादित्यस्य जन्मन् जन्मनि ततएवं सति मनुष्यस्य सृष्टिक्रमात् पूर्वं अग्निर्ह अग्निरेव ऋतस्य कर्मफलस्य भोक्तॄणां नोस्माकं प्रथमजाः प्रथमजातः समुत्पन्नः " तेजोरसोनिरवर्तताग्निरि " तिश्रवणात् । पश्चात्तत्करणे ततोमनुष्या अजायन्तेति प्रथमतएव मनुष्यसृष्टेरभिहितत्वात् अनन्तरं पूर्वे उत्तरसृष्टिमपेक्ष्य पूर्वत्वं, आयुनि काले अयमग्निरेव वृषभश्चासीत् धेनुश्चाभवत् स्त्रीपुंसवत् स्त्रीपुंसात्मकोभवदित्यर्थः ॥ ७ ॥

अनुवाद–" सदेवसौम्येदम् " " असदेव " इत्यादिक श्रुतिसिद्ध अव्याकृत और व्याकृत यानें अनिर्वचनीय समग्रप्रपंच ज्ञानात्मक कारणरूप जिस् परमेश्वरमें प्रादुर्भूत हुवा उस समय पृथ्वीके समीप द्युलोकके अधिष्ठाता सूर्य आविर्भूतहुवे, और इसके बाद मनुष्यसृष्टिके पहिले कर्मफलोंको भोगनेवाले हम लोकोंसें प्रथम अग्निदेवप्रादुर्भावको प्राप्तहुवे, " तेजोरसात्मक अग्निदेव

४१. ७ ५ २७ यत्रानन्दाश्चमोदाश्चमुदःप्रमुद आसते।

कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव॥११॥

यत्र यस्मिन् लोके आनन्दादय आसते, तेषामल्पोभेदोद्रष्टव्यः, यत्रलोके कामस्य काम्यमानस्य देवस्य सर्वेकामा आप्ताः प्राप्ताभवन्ति, तत्रमाममृतं कृधि एतच्च त्वयाविना नघटत इति हे सोम त्वं परिस्रव ॥ ११ ॥

अनुवाद-जिस लोकमें आनन्दप्रमोदहर्षादिक सततनिवास करते हैं, और जिस लोकमें देवोंकेभी सकल मनोरथ पूर्ण होतेहै, वहांपर मुझे अमृतत्व-रूपसे याने जन्ममरणादिविकाररहित स्वरूपसे तुम स्थापित करो, यह कार्य तुमारे सिवाय बननेकानहिं, इसी लिये हे सोम ? तुम इन्द्रके लक्ष्यार्थभूत परमेश्वरको प्राप्त हो ॥ ११ ॥

४२. ७ ५ ३३ असच्चसच्चपरमेव्योमन्दक्षस्यजन्मन्नदितेरुपस्थे।

अग्निर्हनःप्रथमजाऋतस्यपूर्वआयुनिवृषभश्चधेनुः ॥७॥

असदव्याकृतं सच्चव्याकृतं "असदेवेदमग्रआसीत्" (छा ६-२-१) "ततसदासीत् तत्समभवत्" इतिश्रुतेः। सदसदात्मकं जगत्सर्वं परमेउत्तमेज्ञानसहिते व्योमन् व्योमनि कारणात्मनि जातमभूत्तदा अदितेः पृथिव्याउपस्थे उत्स्थाने समीपे दक्षस्य प्रजापतेः यद्वा दक्षस्य "स त्रेधात्मानं विभजतादित्यंतृतीयंवायुं तृतीयमि" तिश्रुतेः। तृतीयस्य द्युलोकस्याधिष्ठातृत्वादादित्यस्य जन्मन् जन्मनि ततएव सति मनुष्यस्य सृष्टिक्रमात् पूर्वं अग्निर्हि अग्निरेव ऋतस्य कर्मफलस्य भोक्तृणा नोस्माकं प्रथमजाः प्रथमजातः समुत्पन्नः "तेजोरसोनिरवर्तताग्निरि" तिश्रवणात्। पश्चात्सम-करणे ततोमनुष्या अजायन्तेति प्रथमतएव मनुष्यसृष्टेरग्निर्हितत्वात् अनन्तरं पूर्वं स्वचरसृष्टिमपेक्ष्य पूर्वत्वं, आयुनि काले अयमग्निरेव वृषभश्चासीत् धेनुश्चाभवत् स्त्रीपुंसवत् स्त्रीपुंसात्मकोभवदित्यर्थः ॥ ७ ॥

अनुवाद-"सदेवसौम्येदम्" "असदेव" इत्यादिक श्रुतिसिद्ध अव्याकृत और व्याकृत यानें अनिर्वचनीय समग्रप्रपंच ज्ञानात्मक कारणरूप जिस परमेश्वरसे प्रादुर्भूत हुवा उस समय पृथ्वीके समीप द्युलोकके अधिष्ठाता सूर्य आविर्भूतहुये, और इसके बाद मनुष्यसृष्टिके पहिले कर्मफलोंको भोगने-वाले हम लोकोंसे प्रथम अग्निदेवप्रादुर्भावको प्राप्तहुवे, "तेजोरसात्मक अग्निदेव

प्रकट हुये " ऐसा श्रुतिभी कहतीहै. उसकेबाद उसीक्रममें मनुष्यलोक उत्पन्न हुवे, उस् मनुष्यसृष्टिके प्रथम प्रादुर्भावपायेहुवे अग्निदेवकेरक्ष्यार्थ परमेश्वर वृषभ धेनु स्त्रीपुरुष इत्यादिक सर्व स्वरूप हुवे ॥ ७ ॥

४३. ७ ७ १६ संयद्वयंयवसादोजनानामहंयवादउर्वज्रेअन्तः ।

अत्रायुक्तोवसातारमिच्छादथोअयुक्तंयुनजद्ववन्वान् ॥ ९ ॥

अनया ऋषिरिन्द्रप्रसादलब्धं स्वस्य सार्वात्म्यं प्रकाशयति–जनानांलोकानांमध्ये ये यवसादः तृणस्याचारः पशवः ते वयमिति सं सम्यक् जानीहि, ये च यवादः यवोपलक्षितस्यान्नस्याचारो मनुष्यास्तेपिवयमिति संजानीहि । वस्तुतस्तु उर्वज्रेविस्तीर्णे अजिरेंगणे हार्दाकाशरूपे यत् अंतः अंतर्यामिरूपं ब्रह्म तदहमस्मि-अत्रास्मिन् हार्दाकाशे युक्तः समाहितोभवानिन्द्रः अवसातारं आत्मनः संभक्तारं इच्छात् इच्छति आत्मसाक्षात्कर्तुं । अथो अपिच अयुक्तं अयोगिनं ववन्वान् ववन्वतं अतिशयेन विषयान् सेवमानं पुरुषं युनजत् युनक्ति संसारे शापानुग्रहसमर्थो भवद्रूपोहमेवास्मीति भावः ॥ ९ ॥

अनुवाद–इस मन्त्रसें परमेश्वरकी कृपाद्वारा होनेवाला अपना सार्वात्म्यभाव प्रतिपादित करतें है–लोकोंकीमध्यमें जो घांस खानेवाले पशुलोक हैं, वे हमही है, याने उनका हमारा वास्तविक भेद नहि है. ऐसा जानो. और जो लोक यवादिक अन्न खातें हैं ये मनुष्यभी हमही है, याने प्रत्येक भिन्न भिन्न देहादिरूप उपाधिकेद्वारा भेदप्रतीतिहोनेपरभी निरुपाधिक तात्विक स्वरूप वो एकही है ऐसा जानो. वास्तविक रीतिसें इस हृदयाकाशमें अन्तर्यामिरूप परब्रह्म ( भागत्याग लक्षणासें ) मेंही हुं. । इस हृदयाकाशमें अवस्थित जीवात्मा अपने नियामक बिम्बस्थानापन्न परमेश्वरका साक्षात्कारको चाहता है. और अत्यन्त विषयलंपट अयोगि याने अजितेन्द्रिय पुरुषोंको दंड देनेवाला यानें संसारमें निग्रहानुग्रह करनेंमें समर्थ प्रत्यक्चेतनात्मक परमेश्वर मेंही हुं ॥ ९ ॥

४४. ७ ७ १६ अत्रेदुमेमंससेसत्यमुक्तंद्विपाच्चयच्चतुष्पात्संसृजानि ।

स्त्रीभिर्योअत्रवृषणंपृतन्यादयुद्धोअस्यविभजानिवेदः॥१०॥

भे मम अत्रास्मिन्स्तोत्रेउक्तं मयाकथितं सत्यमित् यथाभूतमेव मंससे त्वं जानीहि अर्थवादरूपेण नैतदध्यारोपितमित्यर्थः । किञ्च द्विपाच्च मनुष्यादिकं च

चतुष्पाच पश्वादिकंच यत्स्थावरजंगमात्मकं जगत्संसृजानि अहमुत्पादयामीति अत्रास्मिञ्जगति स्त्रीभीः स्त्रीसदृशैर्बलादिहीनैः पुरुषैः सह यः शूरंमन्योजनः पूर्णं अभिलषितस्य वर्षितारं मां परित्यज्येतिशेषः। पृतन्यात् युद्धं कर्तुमिच्छति, अहं अस्येदृशस्य स्वभूतं वेदोधनं अयुद्धः तेन पुरुषेणायोद्धा सन् बलादपहृत्य विभजामि स्तोतृभ्यो यष्टृभ्यश्च ददामीत्यर्थः ॥ १० ॥ १६ ॥

अनुवाद–इसके पूर्वमन्त्रमें कहा हुवा वृत्तान्त यथार्थवादात्मक है, अर्थवादरूपसें अध्यारोपित नहिं है, में (परमात्मा) मनुष्यादिक और पश्वादिक स्थावरजंगमात्मक सकल विश्वको उत्पन्न करता हुं, इस जगत्में स्त्रीयोंके तुल्य बलपराक्रमादिरहित पुरुषोंकेसाथ अपनेंको शूरमाननेवाला याने शूरत्वाभिमानी (पुरुष) सकल कामोंको पूर्ण करनेवाले मुझको छोडकरके युद्ध करनेको चाहता है, यानें स्वयं निर्बलहोनेपरभी बलमद परमेश्वरका अनुसन्धान न करके (वागादि) युद्ध करनेको जो चाहता है उसका सर्वस्व बलात्कारसें लेकरके स्तुति करनेवाले और ईश्वरयजन करनेवाले अधिकारियोंको में अर्पण करदेताहुं ॥१०॥

३५. ७ ७ १७ यस्यानक्षादुहिताजात्वासकस्तांविद्वाँअभिमन्यातेअन्धाम्।

कतरोमेनिंप्रतितंमुंचातेयईंवहातेयईंवावरेयात् ॥११ ॥

यस्येन्द्रस्य मम कारणरूपेणावस्थितस्य अनक्षा अक्षिवर्जिता दर्शनहीना अचेतनेत्यर्थः दुहिता प्रकृत्याख्या जातु कदाचित् आस–महाप्रलये मय्येव लीना सती सर्वत्र वर्तते। तां प्रकृतिं विद्वान् मय्येवलीनां जानन् मत्तोन्योदेवःको भवति नकोपीत्यर्थः। अपिच अंधां दर्शनहीनामचेतनां तां अभिमन्याते आत्मन्याश्रय-प्रदानेन कोदेवोभिपूजयति, यद्वा क्षीरोदकवत् घटाकाशवच्च मया सहैकीभूतां तां आभिमुख्येन कोजानाति अहमेव सर्वज्ञः स्वात्मन्याश्रयप्रदानेनाभिपूजयामि मया सहैकीभूतां तां तत्त्वतोहमेव जानामि नान्यइति। किञ्च कतरोदेवः मेनिं वज्रं प्रसिद्धं वृत्रादिशत्रुं प्रतिमुचाते मुंचति, स्वयमेव प्रश्नमुत्थाप्येदानीं प्रतिवक्ते-योदेव ईमेनं शत्रुं वहाते वहति अपिवा यईमेनं वरेयात् वारयितुमिच्छति सचाहमेव नान्योमत्सदृशोस्तीत्यर्थः ॥ ११ ॥

अनुवाद—कारणरूपसें सर्वत्र अवस्थित परमात्मस्वरूप जो मे हुं उसकी (मेरी) दुहिता वशवर्तिनी अचेतन प्रकृति है सो महाप्रलयमें मेरे स्वरूपहीमें लीन होती है, उस प्रकृतिको " मेरी भीतर लीन होतीहै " ऐसा जाननेवाला मुझसें अन्य दुसरा कोइ है नहिं यानें प्रकृतिको अपने स्वरूपनें अन्तर्गत समझनेवाला आत्मज्ञ कहाजाता है, और " ब्रह्मवेद ब्रह्मैवभवति " इस नियमसें वह आत्मज्ञ परब्रह्मरूपसें अवस्थित होताहै। और अचेतन उस प्रकृतिको निज स्वरूपमें आश्रय देकर कौन देव सत्कार करसकाहै? अथवा नीर और क्षीरकी तरह और घटआकाशकी तरह किंवा घटाकाशमहाकाशकी तरह मेरे स्वरूपसें एकीभावको पाइ हुइ इस प्रकृतिको ( उससें संबन्ध होनेपरभी निर्लेपरूपसें) कोन जानसकाहै? यानें में ही सर्वज्ञ जो परमेश्वर हुं सो निज स्वरूपमें आश्रय देकर उसको तात्त्विकरूपसें जानताहुं, दूसरा (अज्ञ) जान सक्तानहिं. और मुझसे अतिरिक्त कौन देव वृत्रादिक शत्रु (कामादिक) को नाश करनेके लिये (विवेकरूप) वज्रको लेकर उपयोग करसकाहै? स्वयंही प्रश्न करके उत्तर देते हैं की— जो देव इन (कामादिक) शत्रुओंको वहन करताहै अथवा निवारण करताहै सो मेंही हुं. मेरे सिवाय दूसरेकी वैसी शक्ति नहिं. ॥ ११ ॥

४६. ७ ७ १७ कियतीयोषामर्यतोवधूयोःपरिप्रीतापन्यसावार्येण।

भद्रावधूर्भवतियत्सुपेशाःस्वयंसामित्रंवनुतेजनेचित् ॥१२॥

कियती किंपरिमाणा योषा स्त्रीजातिः मर्यतो मनुष्यसंबंधिनो भोगानाचरतः वधूयोः स्त्रीकामस्य सर्वात्मकस्यान्तर्यामिरूपेणावस्थितस्येन्द्रस्य परिप्रीता अनुरक्ता वशवर्तिनीत्यर्थः। कीदृशस्य वार्येण वरणीयेन पन्यसा स्तोत्रेण स्तुतस्य सतइतिशेषः। अपिच यत् या वधूः भद्रा कल्याणी सुपेशाः शोभनरूपा च भवति सा द्रौपदीदमयन्त्यादिका वधूः स्वयमात्मनैव जने चित् जनमध्येऽवस्थितमपि मित्रं प्रियमर्जुननलादिकं पतिं वनुते याचते स्वयंवरधर्मेण प्रार्थयते, सच प्रीयमाणो वरजनोऽहमेवेत्यभिप्रायः। " रूपंरूपंप्रतिरूपो बभूवेति " (ऋ. सं. ४-७ २३) मन्त्रलिंगात्सर्वात्मकत्वादिति ॥१२॥

अनुवाद–मनुष्यसम्बन्धि भोगोंका निष्पक्षपातसें उपभोग करनेवाले और वरणीयपरमयोग्य स्तोत्रसें स्तुत्य याने स्तुति किये जाते सर्वात्मक और अन्तर्यामि स्वरूपसें सर्वत्र अवस्थित इस् परमेश्वरको स्त्रीविषयक अभिलाष जब हुवा तब उनको वशवर्तिनी याने उनके अधीन रहनेवाली और उनके उपर परम अनुरक्त होती हुइ कितनी स्त्रीयाँ उपलब्ध होतीहै ? जो स्त्री परमकल्याणवाली होकर सौन्दर्यवाली हो, जैसे द्रौपदी दमयन्ती सीता इत्यादिक स्वयंखुद जनसमूहमें बैठे हुवे अर्जुन नल श्रीरामचन्द्र इत्यादिक को प्रियपति बनानेको स्वयंवर धर्मसें प्रार्थना कररहीहैं, यानें उन् पुरुषोंमें वैसा शोभनांश जो है सो मेंही हुं- श्री कृष्ण भी कहेतें हैंकी " यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेववा, तत्तदेवावगच्छत्वंममतेजोंऽशसंभवम् " लोकमें जितनें पदार्थ सकलप्रकारसें उत्कृष्टतरहै वे मेरे दिव्यतेजके अंशवालेंहै ऐसा तुम जानो. तो द्रौपद्यादिकको वरणीय और प्रेमपात्र जो अंश देहेन्द्रियादिसंघातमे प्रतीत हुवा वह अंश में ही हुं, यह इस मन्त्रका भावहै. (ऋ. सं. ४-७-२३) श्रुतिनेभी कहाहै की " प्रत्येक पदार्थोमें अनुस्यूत बनके यह (परमात्मा) रहाहै याने सर्वात्मक सर्वस्वरूप है॥१२॥

ऋ०, ७ ७ १९ सातेजीवातुरुततस्यंविद्धिमास्मैताहगपंगूहःसमर्ये।
आविःस्वःकृणुतेगूहतेबुसंसपादुरस्यनिर्णिजोनमुच्यते॥२४॥

अत्रान्तरात्मनेन्द्रः स्तूयते–हे अन्तरात्मन् तेतव सा तादृशी आदित्यात्मिका देवता जीवातुः जीविका जीवनहेतुः, उतापिच तस्यादित्यस्य च एतादृक् ईदृशं स्वरूपं समर्ये, संग्रामवाची समर्यशब्दोऽत्र यज्ञवाची, यज्ञे विद्धि जानीहि, स्तुत्यत्वेनेतिशेषः। मास्मापगूहः माखलपवृणोः। किञ्च निर्णिजः सर्वस्य शोधयितुरस्यादित्यस्य सपादुः तच्च पादनं गमनं रश्मिद्वारेण गत्वा स्वः सर्वं त्रैलोक्यं आविष्कृणुते प्रकाशीकरोति। बुसमुदकं गूहते संवृणोति आदत्ते इत्यर्थः। अस्य प्रयोजनद्वयायादित्येन निर्वेदनात् श्रमेणवा गमनं न मुच्यते नकदाचित्परित्यज्यत इत्यर्थः॥ २४॥

अनुवाद–इस् मन्त्रमें अन्तरात्मस्वरूपसे इन्द्रकी स्तुति करतेंहैं–हे अन्तरात्मन् ! आदित्यस्वरूप देवता सो तुमारे जीवनमें हेतुभूत है. सूर्यके उस स्वरूपको यज्ञमें तुम स्तुति करने योग्य समझो, उस सूर्यका अपवारण अन्तर्धान

मत करो, जो सूर्य रश्मिद्वारा त्रिलोकीमें गमन करके सकल पदार्थोंको प्रकाशित करतेहैं, और अपने किरणोद्वारा जलको ग्रहण करते हैं, सूर्य इन्‌दोनो प्रयोजनके लिये याने-प्रकाश और जलग्रहण करनेके लिये परिश्रमपूर्वक गमन करते हैं, किसी समयभी अपनी सतत गतिको छोडते नहिं ॥ २४ ॥

४८. ८ १ २० यत्तेयमं वैवस्वतं मनोजगाम दूरकम्।
तत्त आवर्तयामसीह क्षयाय जीवसे ॥ १ ॥

यत्तेयममिति द्वादशर्चं षोडशं सूक्तं आनुष्टुभं बन्ध्वादयऋषयः सुबन्धुदेहान्निर्गतस्येन्द्रियवर्गसहितस्य मनसः पुनस्तस्मिन्प्रवेशनार्थमिदं सूक्तं दृष्ट्वाऽजपन् इत्यादि.

पुरुषस्य म्रियमाणस्य मनोनाम महद्भूतं बहुधा विशिर्णंभवति, तस्यपुनः संमरणमशोच्यते–हे म्रियमाण पुरुष तेतवमनोवैवस्वतं विवस्वतः पुत्रं यमं दूरकं अत्यन्तं दूरं यथाभवति तथा जगाम, ते तव तन्मन आवर्तयामसि आवर्तयामः किमर्थं इह क्षयाय इह लोके निवासाय जीवसे चिरकालजीवनाय ॥ १ ॥

अनुवाद.–बन्ध्वादिक तीन भाइ थे उनमेंसे सुबन्धुनामक भ्राता के स्थूल शरीरमेंसे इन्द्रिसमुदायसहित मन उपलक्षित लिंगशरीर निकलकरके परलोकमे जब चला गया तब दूसरे भाइओंने आत्माको अविनाशी और विभु समझके उसी मृत शरीरमे वापस बुलाया है सो कथा अग्रिम मन्त्रोंमें कहते हैं—हे म्रियमाण मरनेवाले पुरुष ! तुमारा मन सूर्यके पुत्र यमराजके पास अत्यन्तदूर पहुंचा हो तो उस मनको इस् लोकमे चिरकाल पर्यन्त निवास करनेको याने जीवन भोगनेको ( हम ) बुलाते है. ॥ १ ॥

४९. ८ १ २० यत्ते दिवं यत्पृथिवींमनोजगाम दूरकम्।
तत्त आवर्तयामसीह क्षयाय जीवसे ॥ २ ॥

हे सुबन्धो यन्मनोदिवंजगाम, यच्च पृथिवीं दूरकं, दूरकमिति क्रियाविशेषणं, तदिह निवासाय जीवनाय चावर्तयामः ॥ २ ॥

अनुवाद.–हे सुबन्धो ! अगर तुमारा मन स्वर्गमें अथवा पृथ्वीमें दूर गया हो तोभी इसी जगापर निवासके लिये और चिरकाल जीवन धारण करनेको हम बुलाते है ॥२॥

५०. ८ १ २० यत्तेभूमिंचतुर्भृष्टिंमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ३ ॥

हे सुबन्धो यन्मनोभूमिं चतुर्भृष्टिं चतुर्दिक्षु भ्रंशो यस्याः सा तां जगाम तदावर्तयामः ॥ ३ ॥

अनुवाद–हे सुबन्धो! अगर तुमारा मन सकल दिशापर्यन्त पृथ्वीमें गया हो तोभी उसको वापस बुलाते है. ॥ ३ ॥

५१. ८ १ २० यत्तेचतस्रःप्रदिशोमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ४ ॥

हे सुबन्धो, यत्तेमनः प्रदिशः प्रकृष्टामहादिशः चतस्रोजगाम, तदावर्तयामः॥४॥

अनुवाद–हे सुबन्धो ! अगर तुमारा मन पूर्वपश्चिमादिक महादिशाओंमें गयाहो तो उसको हम यहा वापस जीवनार्थ बुलातेहैं ॥ ४ ॥

५२. ८ १ २० यत्तेसमुद्रमर्णवंमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ५ ॥

हे सुबन्धो, यत्तेमनः अर्णवंउदकं तद्वन्तं समुद्रं मेघं वा जगाम तदिति गतं॥५॥

अनुवाद–हे सुबन्धो ! अगर तुमारा मन जलवाले पदार्थ समुद्र अथवा मेघ मंडलमें गया होतो उसको हम इस् जगे निवासार्थ वापस बुलातेहैं ॥ ५ ॥

५३. ८ १ २० यत्तेमरीचीः प्रवतो मनोजगाम दूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ६ ॥

हे सुबन्धो यत्तेमन प्रवतः प्रगच्छन्तीर्मरीचीर्दीप्तीर्जगाम तदितिगत ॥६ ॥

अनुवाद–हे सुबन्धो ! अगर तुमारा मन सर्वत्र व्याप्त होनेवाली कान्तिमें गयाहो तो तुमको इस् जगे वापस हम बुलाते है. ॥ ६ ॥

५४. ८ १ २१ यत्तेअपोयदोषधीर्मनोजगाम दूरकम् ।

तत्तआवर्तयामसीहक्षयायजीवसे ॥ ७ ॥

अनुवाद–हे सुबन्धो ? अगर तुमारा मन जलमें या ओषधिमें दूर गया हो तो उस मनको हम यहां निवासकेलिये वापस बुलाते हैं.॥७॥

५५. ८ १ २१ यत्तेसूर्यंयदुषसंमनोजगामदूरकम् ।

तत्तआवर्तयामसीहक्षयायजीवसे ॥८ ॥

अनुवाद–हे सुबन्धो ? अगर तुमारा मन सूर्यमें अथवा प्रातःकालादि समयमें दूर गया हो तो हम उसको वापस बुलाते हैं. ॥ ८ ॥

५६. ८ १ २१. यत्तेपर्वतान्बृहतोमनोजगामदूरकम् ।

तत्तआवर्तयामसीहक्षयायजीवसे ॥ ९ ॥

अनुवाद–हे सुबन्धो ? अगर तुमारा मन बडे; बडे पर्वत हिमालयादिकमें दूर गया हो तो उसको हम वापस बुलाते हैं. ९ ॥

५७. ८ १ २१ यत्तेविश्वमिदंजगन्मनोजगामदूरकम् ।

तत्तआवर्तयामसीहक्षयायजीवसे ॥ १० ॥

अनुवाद–हे सुबन्धो ? अगर तुमारा मन इस् समग्र जगतमें कहींभी गया हो तो उसको हम बुलाते हैं.॥ १० ॥

५८. ८ १ २१ यत्तेपराःपरावतोमनोजगामदूरकम् ।

तत्तआवर्तयामसीहक्षयायजीवसे ॥ ११ ॥

हे सुबन्धो यत्ते मनः पराः परावतः अत्यन्तं दूरदेशान् जगाम तदिति गतं ॥ ११ ॥

अनुवाद–हे सुबन्धो ? अगर तुमारा मन अत्यन्त दूर देशमें गया हो तो उसको हम वापस बुलाते हैं. ॥ ११

५९. ८ १ २१ यत्तेभूतंचभव्यंचमनोजगामदूरकम् ।

तत्तआवर्तयामसीहक्षयायजीवसे ॥ १२ ॥

हे सुबन्धो यत्ते मनोभूतंचभव्यंचेत्यनेन भूतभव्यात्मकव्यतिरेकेण कस्य-चिदभावाद्वर्तमानस्य पृथगेवाभिधानात् कृत्स्नंमपंचमुक्तं भवति, तत्र सर्वत्र गतं मनो जीवनाय निवासायचावर्तयामः ॥ १२ ॥

अनुवाद-हे सुबन्धो? अगर तुमारा मन भूत भविष्यत् और वर्तमान कालमें अवस्थित प्रपञ्चके किसी पदार्थमें गयाहो तो उसको हम जीवनार्थ इस् लोकमें निवास करनेको वापस बुलाते है. ॥ १२ ॥

६०. ८ २ २४ सर्वेनन्दन्तियशसागतेनसभासाहेनसख्यासखायः

किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥१० ॥

अध्यात्मरीत्या रावणभाष्यं-यशसापरमात्मना आगतेन प्राप्तेन सर्वे-जीवाः नन्दंति, परमानन्दं प्राप्नुवन्ति. यथा नृपशुपक्षिप्रभृतयः सर्वेजीवाः सुषुप्ति-समये परमसुखिनो भवन्ति तद्वदात्मप्राप्तावित्यर्थः। किंभूतेन यशसा सभासाहेन समांस्तेजोरूपानर्थप्रकाशकान् चक्षुरादीन्सहते आक्रमतेसतथा। पुनः कथंभूतेन सख्याउपकारकेणापि विषयभोगनिमित्तत्वेनेत्यर्थ। किंभूताः जीवाः सखायः समान-ज्ञानाः सदृशसुखानुभवाः अथैषांजीवानां मध्ये यःपितुषणिः पितुरित्यन्ननाम पितुः सुनोति सपितुषणिः केवलमुदरंभरः सकिल्बिषस्पृक् दुःखभागी भवति। हि यस्मात् कारणात् अरमत्यर्थं वाजिनाय इन्द्रियवीर्याय हितः तत्परोभवति. अथैतदुक्तं भवति सुखशब्दव्यपदेश्यं आत्मसुखमेव सुखं, इन्द्रियसुखंतु दुःखपक्षान्तर्भूतमि-त्यर्थः ॥ १० ॥

अनुवाद-इस् मन्त्रका अध्यात्मविषयक रावणभाष्य-" न तस्य प्रति-मास्ति यस्य नाम महद्यशः " उस् परमेश्वरका परिमाण-परिच्छेद है नहिं, के जिसका नाम " महत् " " यशः " ऐसा है, इस् वेद वाक्यके अनुसार "यशस् शब्दका अर्थ परमेश्वर होताहै. जैसे मनुष्य पशु पक्षी इत्यादिक प्राणी सुषुप्ति अवस्थामें परम सुखी होते हैं तैसें ही इस् " यशः " शब्दवाच्य परमेश्वरसे

तादात्म्यअभेदपाकरके निरतिशय आनन्दको अनुभवते हैं, की जो परमात्मा ("गृहीता वाग् गृहीतं चक्षुः" (बृ. २-१-१७) उस् सुषुप्तिके समयमें वागादिक इन्द्रियें अपने कारणमें लीन होनेमें उस् समय आत्मा स्वयं एकही अवशिष्ट रहता है इत्यादिक श्रुतिसें ) तेजो रूप और अर्थ पदार्थको प्रकाश करनेवाले चक्षुरादिक करणोंका आक्रमण करनेवाला याने नियन्ता है. और स्वयं अपनी चैतन्य शक्तिकी सहायता देकरके तत्तदिन्द्रियद्वारा जीवात्माके विषय भोगमें उपकारक बनता है. और वहजीवभी उस् परमेश्वरके समान ज्ञानवाले याने तुल्यसुखानुभव वाले है. इन् जीवोंकी मध्यमें कोइ जीव अगर उदरंभर याने सिर्फ अपने पेटभरनेंहीमें सावध हो तो वह दुःखभागी बनता है. क्योंकी उदरपोषणहीमें तत्पर जो जीवहै सो इन्द्रियोंको प्रबल बनानेंमें मुस्तेहद है, और इन्द्रियवर्ग प्रबल होनेंसें विषय लंपट होकर अधः पातको पाताहै. यानें निरतिशय निर्विशेष अखडित जो आत्मसुख है वही सत्य सुख है और इतर वैषयिक इन्द्रिय व्यापार जन्य जो सुखहै सो सुखाभास होकरके दुःखरूपहीहै ॥१०॥

६१. ८ ३ १ ॐ॒म्देवानांनुवयंजानामवोचामविपन्यया ।

उक्थेषुंशस्यमानेषुयःपश्यादुत्तरेयुगे ॥॥ १ ॥

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत् तद्ब्रवीति, बृहस्पतिऋषिपक्षे सऋषिः अदितेः सकाशात् आदित्योत्पत्तिप्रकारमाह, वयंदेवाना मादित्याना जाना जन्मानि प्रवोचाम प्रकथयाम, विपन्यया विस्पष्टया वाचा, वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचन । अथैकवदाह योदेवानांगण. पूर्वेयुगे उत्पन्नोपि उक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषु उत्तरे युगे वर्तमानं स्तुवन्तं स्तोतारं पश्यात् पश्यति अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानोवर्तत इत्यर्थः ॥ १ ॥

अनुवाद-दाक्षायणी अदितिनें जैसें आदित्य-देवोंको प्रकट किये सो इन् मन्त्रोसे कहतीहै. बृहस्पति ऋषिके पक्षमें वह ऋषि अदितिसें आदित्यप्रादुर्भावका प्रकार कहते हैं. हम देवोंका जन्म स्पष्टवाणीसें कहते है की-जो देवसमुदाय पुर्व युगमें आविर्भूत होनेपरभी यज्ञयागादिकमें शस्त्रानुष्ठान प्रवृत्त होता हैं तब उत्तर युगमें वर्तमान अपनी स्तुति करनेवालें कों देखता है, यानें

अनेक युग व्यतीत होजानेपरभी कर्मके प्रसंगमें जो देवगण स्तूयमान होता है उस् देव गणका प्रादुर्भाव हम कहतेहैं. ॥ १ ॥

६२ ८ ३ १ ब्रह्मणस्पतिरेतासंकर्मारइवाधमत् ।

देवानांपूर्व्येयुगेऽसतःसदजायत ॥ २ ॥

ब्रह्मणोमन्त्रस्य पतिरदितिः एताएतानि देवाना जन्मानि कर्मार इव सयथा भस्त्रया अग्निमुपधमति प्रज्वलनार्थम् एव समधमत् उदपादयदित्यर्थ. । देवाना पूर्व्ये युगे आदिसृष्टावित्यर्थः तेषामुपादानकारणादसतो नामरूपवर्जितत्वेना-सत्समानाद्ब्रह्मणः सकाशात् सत् नामरूपविशिष्ट देवादिकमजायत प्रादुरभूत् । " असद्वाइदमग्र आसीत्ततोवैसदजायते" तिहिश्रुतिः (तैत्तिरीय २-७)–न सदा-त्मकस्य प्रपंचस्यासत् कारणत्वं युक्तमितिवाच्यं, छंदोगैः "कथमसतः सज्जायेत" इत्यसत्कारणत्वमाक्षिप्य "सदेवसोम्येदमग्रआसीदित्यवधारितत्वात्" ( छा. ६-२-२, ६-२-१) । तर्हि असत्कारणप्रतिपादकवाक्यानां कागतिरिति चेत् तेषाम-व्याकृतत्वाभिप्रायत्वात् " तद्धेदंतर्ह्यव्याकृतमासीदि " त्यादिश्रुतेः । ( बृ. उ० १-४-७ ) यद्येवं तर्ह्यदितेः सकाशात्कथं देवोत्पत्तिः ? वायोरग्निरित्यादिवत् अधिष्ठानसकाशादुत्पत्तेः. यद्वादेवाना कारणभूतं सदसतोर्ब्रह्मणः सकाशादुत्पन्न मिति योजनादुक्तन्यायोस्मिन्पक्षेपिसमानएव ॥ २ ॥

अनुवाद–लोहकार जैसें भस्त्रा धमनीद्वारा अग्निको धमन करके ( अपनें कारणमें विशेष रूपसें ) अभिव्यक्त करताहै तैसेही ब्रह्मपालन करने-वाली अदितिनेभी आदिसृष्टिमें देवोंका प्रादुर्भाव किया । व्यवहारका अविषय होनेसे असद्रूप उपादान कारण जो ब्रह्महै उससें सत् याने व्यवहारके विषयमूत नामरूपविशिष्ट देवादिकसमुदाय प्रादुर्भावको प्राप्त हुवा. श्रुतिभी कहती हैकी " सृष्टिके प्रथम मार्गमें यहसब असद्रूपहीथा " उससें " सत् " का प्रादुर्भाव हुवा है । छान्दोग्यमें कहा हैकि " असत् पदार्थसें सत्पदार्थका प्रादुर्भाव कैसे होसका ? " ऐसा कहेकरके असत् पदार्थका कारणभाव बाधित करके " सदेवसौम्येदमग्र आसीत् " हे सौम्य ? यह प्रथम सद्रूपहीथा, ऐसा सद्रूप पदार्थको कारण बतानेंसे व्यवहारसमयमें सत्त्वरूपसें प्रतीयमान यह प्रपञ्च असत्कारणक नहि हैं, यानें असत् कोइ कारणसें यह जगत् प्रादुर्भावको पाया

हुवा नहिं। अगर ऐसा कहा जायकी पूर्वोक्त मन्त्र " असद्वा इदमग्र " इसकी क्या गति होगी ? यानें एक वाक्यमें " असत् " को कारण बतलाया है और " सदेवसौम्येदमग्र " इस वाक्यमें " सत् " को कारण कहाहै तो यह वेद वाक्यका परस्पर विरोध कैसे उद्धृत होगा ? तो समाधान यहहैकी इस वाक्यमें " असत् " पद अव्याकृतका वाचकहै. श्रुतिभी कहती हैकी "तद्धेदं तर्ह्यव्याकृतमासीत् सृष्टिके प्रथम समयमें सकल विश्व अव्याकृत रूपहीथा " यानें यह समस्त प्रपञ्च सत् कारणक होनेपरभी नामरूपसें अव्याकृत रूपही में था ऐसा कहनेसें " असत् " और " सत् " को कारणतामें जो विरोध बतायाथा सो अकिंचित्करहै यानें सो विरोध है ही नहिं। अगर ऐसा कहा जायकी जब सद्धेतुक प्रपंच है तब अदितिसें सकल देवगणका प्रादुर्भाव कैसें हुवा ? तो समाधान ऐसा हैकी जैसें सकल प्रपंचका परम कारण परमात्मा है तथापि " आकाशसें वायु और वायुसे तेज और तेजसें जल इत्यादिक सृष्टि बताइहै तैसे परम कारण " सत् " है तथापि गौण कारण अदिति है ऐसा समझनेसें व्याख्यान निर्दोष है. अथवा देवोंका कारणभूत जो " सत् " व्यवहार विषयक पदार्थ है सो " असत्" यानें व्यवहारागोचर परब्रह्मसें प्रादुर्भूत हुवा ऐसा कहेनेमेंभी निर्दोष है. ॥ २ ॥

६३. ८ ३ १ देवानांयुगेप्रथमेसतःसदजायत ।

तदाशाअन्वजायन्ततदुत्तानपदस्परि ॥ ३ ॥

पूर्वार्धमुक्तं त दन्वाशोदिशो जायन्त, तत्परि तदन्वित्यर्थः उत्तानपदः उत्तानमूर्ध्वतानं पद्यन्ते इत्युत्तानपदो वृक्षाः ते अजायन्त प्रादुरभवन्॥ ३ ॥

अनुवाद–पूर्वार्द्ध पूर्व मन्त्रकी तरह है याने अव्याकृतसें नामरूपसहित प्रपंच उत्पन्न हुवा, अदितिसें देवादिक प्रादुर्भूत होनेके बाद दिशायें उत्पन्न हुइ. और उसके बाद वृक्ष प्रादुर्भूत हुवे ॥ ३ ॥

६४. ८ ३ १ भूर्जज्ञउत्तानपदोभुवआशाअजायन्त ।

अदितेर्दक्षोअजायतदक्षाद्वदितिःपरि ॥ ४ ॥

भूरुत्तानपदोवृक्षान् जज्ञे, तथा भुवः सकाशादाशाअजायन्त, तथा अदिते र्दक्षः अजायत उत्पन्नः दक्षाद् दक्षादपि अदितिः पर्यजायत, न स्वोत्पन्नं कार्यं स्व-

स्यैव कारणमपिमवतीति विप्रतिषिद्धमइति वाच्यं, यास्काचार्यः इदमेव वाक्य-मुदाहृत्य विरोधमाशंक्य पर्यहरत् तथाहि–अदितेर्दक्षोजायत दक्षाद्वा अदितिः परीतिच, तत्कथमुपपद्येत समानजन्मानौस्यातामित्यपिवा देवधर्मेणेतरेतरजन्मानौ स्यातामित्तरेतरप्रकृती इति ॥ ४ ॥

अनुवाद–पृथ्वीनें वृक्षोंको उत्पन्न किये. और अन्तरिक्षसें दिशायें उत्पन्न हुइ. और अदितिसें दक्ष उत्पन्न हुवे, दक्षसें अदिति उत्पन्न हुइ. यद्यपि अपनेंसें उत्पन्न होनेवाले कार्य अपना कारण नहि होता यानें जो जिसका जन्य है वही पदार्थ उसका जनक ( उत्पादक ) नहि होसक्ता तथापि यास्काचार्यनें इस विरोधका परिहार इस तरहसें कियाहै की दक्ष और अदिति समानजन्मवालेथे अथवा देवधर्मद्वारा परस्पर जन्मवालेथे परस्पर प्रकृतिवाले थे, यानें " दक्ष " नामक किसी व्यक्तिसें अदितिका प्रादुर्भाव हुवा और " अदिति " नामक किसी व्यक्तिसें " दक्ष उत्पन्न हुवा अथवा किसी कालमें यानें पूर्व कल्पमें अदितिसें दक्ष हुवें और इतर कल्पमें दक्षसें अदिति उत्पन्न हुइ. अथवा दक्षोपलक्षित सोपाधिक चेतन अदिति उपलक्षित सोपाधिक चेतनसें अभिव्यक्त यानें " उत्पन्न " शब्दसें व्यवह्रियमाण हुवा और अदिति उपलक्षित सोपाधिक चेतन दक्षोपलक्षित सोपाधिक चेतन से " उत्पत्ति " शब्दसें व्यवहारविषय हुवा ऐसा माननेंसे विरोध है नहिं. ॥ ४ ॥

६५. ८ ३ १ अदितिर्ह्यजनिष्टदक्षयादुहितातव ।
तांदेवाअन्वजायन्तभद्राअमृतबन्धवः ॥ ५ ॥

हे दक्ष या तव दुहितामूत् सा अदितिरजनिष्ट हि पुत्रानादित्यान्। तदे-चाह तांदेवाअन्वजायन्त, भद्राः स्तुत्या भजनीया अमृतबन्धवः अमरणबन्धनाः ॥५॥

अनुवाद–हे दक्ष ! जो तुमारी अदिति नामक पुत्री है उससें मरण रहित और भजन सेवन करनें योग्य आदित्यनामक देव प्रादुर्भूत हुवे ॥ ५ ॥

६६. ८ ३ १६ यइमाविश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानः ॥

सआशिषाद्रविणमिच्छमानःप्रथमच्छदवराँआविवेश ॥१॥

यो विश्वकर्मा परमेश्वर इमा विश्वा भुवनानि जुह्वत्, प्रलयकाले पृथिव्यादीनिमान्सप्तलोकान् स्वात्मन्याहुतिप्रक्षेपवत् संहरन्, ऋषिरतीन्द्रियद्रष्टा सर्वज्ञो होता संहाररूपस्यहोमस्यकर्ता नोस्माकंपिता जनको निषसाद स्वयं स्थितवान्। अयमर्थः-प्रलयकाले प्राप्तेसति सर्वान् लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयमेकएवासीत्। तथाब्रुवंतेहिश्रुतयः—" आत्मावाइद्मेकएवाग्र आसीत् " ( ऐ. उ. १-१ ) " सदेवसोम्येदमग्रआसीदित्यादिकाः" ( छां, ६-२-१ ) । सतादृशः परमेश्वरः आशिषा बहुः स्यांप्रजायेयेत्येवंरूपया पुनः पुनः सिसृक्षया द्रविणमिच्छमानः धनोपलक्षितं जगद्भोगमाकांक्षमाणः प्रथमच्छत् प्रथमंमुख्यं निष्प्रपंचं पारमार्थिकं रूपमावृण्वन्, अवरान् स्वसृष्टान् प्राणिहृदयप्रदेशानाविवेश आविष्टवान् जीवरूपेण। तथाचश्रूयते " सोकामयत बहुः स्यांप्रजायेयेति सतपोतप्यत सतपस्तप्त्वा इदंसर्वमसृजत यदिदंकिंच तत्सृष्ट्वा तदेवानुप्राविशदिति " ( तै. उ. २-६ ) ॥ १ ॥

अनुवाद—जो परमात्मा समग्रब्रह्माण्डको यानें पृथिव्यादिक सप्त लोकोंको स्वस्वरूपमें, आहुतिके प्रक्षेपकीतरह, प्रलयकालमें लीन करता है. अतीन्द्रिय पदार्थोंके ज्ञानवाला सर्वज्ञ, संसारका संहार रूप होम (अपनें स्वरूपमें) करनेवाला हमारा (प्राणिमात्रका) जनक स्वयं सर्वदा अवस्थित है. यानें प्रलयकालमें सकलविश्वका संहार करके हमारा भी संहार करनेवाला और फिरसें (अपनी भीतरहीसें) सर्वको उत्पन्न करनेवाला स्वय एकही है. याने किसी की सहायता न लेकरकेभी यथास्थित विश्वकी उत्पत्ति, स्थिति और प्रलय कररहाहै। श्रुतिभी "प्रथम (सृष्टिके पूर्व) आत्मा एकहीथा" और "यह नामरूपात्मक प्रपंच भी प्रथम सद्रूपही था " इत्यादिक प्रतिपादन करती है। वैसा परमात्मा " मैं अनेक रूप होजाउ " ऐसी सृष्टि करनेकी इच्छासें धनोपलक्षित प्रपंचके भोगोंको चाहता हुवा अपने पारमार्थिक निष्प्रपंच स्वरूपको ( अपनी शक्तिरूप मायासें ) आवृत करके अपनी मायाद्वारा निर्माण; कियेहुवे प्राणी मात्रके हृदयप्रदेशमें जीव स्वरूपसें आविष्ट-प्रविष्ट हुवा। श्रुतिभी कहती हैकी-" वह परमात्माने संकल्प

किया की मैं अनेकरूप होजाउं. वह परमात्मा (आलोचनात्मक) तपश्चरण करनें लगा और वैसा तपश्चरण करके इस प्रपंचकी सृष्टि करनें लगा. इस प्रपंचको उत्पन्न करके उसी प्रपंचके भीतर स्वयंही अनुप्रविष्ट याने प्रवीत हुवा" । ऐसें, औरभी श्रुति इस अर्थसें संगत होती है. ॥१॥

६७. ८ ३ १६ किंस्विदासीदधिष्ठानमारम्भणंकतमत्स्वित्कथासीत् ।

यतोभूमिंजनयन्विश्वकर्माविद्यामौर्णोन्महिनाविश्वचक्षाः॥२॥

पूर्वमंत्रे जगत्प्रलयकाले संहृत्य, पश्चात्सिसृक्षायां सर्वं सृष्ट्वा तत्र प्रविष्ट इत्युक्तं अत्र तस्य द्वितीयस्याधिष्ठानं जगदुपादानकारणायसंभवात् सृष्टिरनुपपन्नेत्याक्षिपति। लोके हि घटं चिकीर्षु कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय, मृद्रूपेणारंभकद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति, तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलायामधिष्ठानं किंस्विदासीत् किंनामाभूत् न किंचिदित्यर्थः, तथा तयोरारंभणं कतमत्स्वित्, आरभ्यते अनेन इति आरंभण उपादानकारणं तदपि कतमद्भवेत् तदपि नेत्यर्थः यद्यपि संभवेदारंभणं कथासीत् कथमभूत् किं स्वयं सदसद्वाभवेदित्यर्थः उभयमपिनोपपद्यते, सच्चेदद्वैतभंगप्रसंगः असच्चेत्सदारंभकयोर्द्यावापृथिव्यो रुपादानानर्हत्वात् "नान्यत् किंचनामिषदि"त्यादि (ऐ-१-१) श्रुतेश्चेत्यभिप्रायः। यतो यस्मादधिष्ठानादारंभणाच्च विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा परमेश्वरोभूमिंजनयन् वर्तते, तथा द्यां दिवं व्यौर्णोत् व्यवृणोत् सृष्टवान्, महिना स्वमहत्त्वेन किंस्विदासीदिति ॥ २ ॥

अनुवाद—"प्रलय समयमे जगत्को प्रलीन करके फिरसें सृष्टि करनेंके प्रसंगमें सकल प्रपंचको उत्पन्न करके उसनें वह परमात्मा प्रविष्ट हुवा" ऐसा पूर्व मन्त्रमें कहा, उसमें प्रपंचरूप कार्यका अधिष्ठान क्या था? और उसका उपादान कारण कौन था? क्योंकी "अधिष्ठान और उपादानके सिवाय किसी कार्यकी रचना हो सक्ती नहिं", इत्यादिक पूर्व पक्षरूपसें इस मन्त्रमें प्रतिपादन करते है. जैसें लोकमें घटको निर्माण करनेंकी इच्छावाला कुम्भकारादिक गृहादि किसी

स्थानमें अधिष्ठित होकरके यानें रहेकरके मृत्तिकारूप आरम्भक द्रव्योंसे दण्डचक्र-चीवरादिसाधनद्वारा घटको बनाता है, तैसेंही इस परमात्माको प्रपंचका आश्रय-रूप आकाश पृथिव्यादि भूतोंको उत्पन्न करनेके समय अधिष्ठान (गृहादि) क्या था? (यानें कुछभी नहि था, क्योंकी आकाशादिक भूत रहे सकें वैसा गृह आकाशादिककी पहिलें कैसे हो सक्ता? जितना अन्य पदार्थ है वह सब आकाशादिक भूतोंहीसें तो उत्पत्तिको पायामया उपलब्ध होताहै) उसी तरह आकाशादिकका आरम्भक उपादान कारण (उस समयमें) कौन था? यद्यपि उपादान कारण होसक्ताहै लेकिन सत् और असत् को छोडकरके दूसरा नहि होसक्ता, सत्को उपादान कहनेंसें अद्वैत सिद्धान्तका भग होताहै. क्योंकी "एक परमात्मा और दूसरा "सत्" रूप उपादानकारण" ऐसा कहनेंसें द्वैतसिद्धि होतीहै. और "असत्" को उपादान कहनेंसें आकाशादिक भूतोंमें "सत्त्व" प्रतीति बाधित होनी चाहिये क्योंकी सकलकार्य अपने कारणके सजातीय होवें हैं. तो यह आकाशादिरूप कार्यभी अपना उपादान कारणभूत जो "असत्" है तदात्मक होना चाहिये और वैसा होनेंसें सद्रूप प्रतीति जो होती है सो असंगत होजायगी। और श्रुतिभी कहतीहैकी "दूसरा कुछ है नहिं" यानें परमात्मा के सिवाय द्वितीय पदार्थ सदात्मक नहिं है तो उस सृष्टिके समय वैसा कौन अधिष्ठान और उपादान था की जिसको स्वीकार करके सर्वद्रष्टा जगदुत्पादक परमेश्वरनें अपने महत्त्वद्वारा आकाशादिक भूतोंको उत्पन्न किये होंय? ॥ २ ॥

६८. ८ ३ १६ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात्।
संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवएकः ॥३॥

अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेपि स्रष्टुं शक्नोतीत्याह, विश्वतश्चक्षुः सर्वतोव्याप्तचक्षुः, उतापिच विश्वतोमुखः, तथा विश्वतोबाहुः उतापिच विश्वतस्पात् स एवंविधः परमेश्वरः स्वस्मिन् त्रैलोक्यमुत्पादयतीत्यर्थः। कथमित्युच्यते—बाहुभ्यां दिवं संधमति धमतिर्गतिकर्मा सम्यक् प्रेरयति, तथा पतत्रैः गमनशीलैः पादैः पृथिवीं संधमतीत्युभयोरेवश्रवण प्राधान्याभिप्रायम्, एवं द्यावाभूमी जनयन् दिवं च पृथिवीं चोत्पादयन् देवो द्योतमानः स्वयंप्रकाशः परमेश्वर एकोऽसहाय एव वर्तते ॥ ३ ॥

अनुवाद—"कुम्भकारादिकसें विलक्षण यानें सर्वात्मक यह परमात्मा अधिष्ठान उपादानादिक किसी पदार्थकी सहायता न लेकर केभी स्वतन्त्ररूपसें प्रपंच निर्माण कर सक्ता है" ऐसा इस् मन्त्रसें प्रतिपादन करतें हैं, सर्वत्र व्याप्तदृष्टिवाला और सर्वत्र व्याप्तमुखवाला, और सर्वत्र व्याप्तबाहुवाला और सर्वत्र व्याप्तचरणवाला यह परमात्मा किसीकी सहायता न लेकर के विश्वोत्पत्ति करता है। कैसे? बाहुद्वयसे आकाशको (उत्पत्तिके लिये) प्रेरणा करता है, और चरणोंसें पृथ्वीको (उत्पत्तिके लिये) प्रेरणा करता है. आकाश और पृथिवीका नामोच्चारण, मात्र उनकी अधिक प्रसिद्धि होनेसे किया है, तथापि तदुपलक्षित सकल प्रपंच इसी तरहसें उत्पत्तिके लिये परमात्मानें प्रेरित किया है; इस प्रकारसें आकाश पृथ्वी और तदुपलक्षित समग्र प्रपंचको उत्पन्न करनेवाला स्वयंप्रकाशी यह परमात्मदेव एकही है यानें किसीकी सहायता न ले करके वर्तमान है ॥ ३ ॥

६९. ८ ३ १६ किंस्वि॒द्वनं॒क उ॒स वृ॒क्ष आ॑स॒ यतो॒ द्यावा॑पृथि॒वी नि॑ष्टत॒क्षुः।

मनी॑षिणो॒ मन॑सा पृ॒च्छतेदु॒तद्यद॒ध्यति॑ष्ठ॒द्भुव॑नानि धा॒रय॑न् ॥४॥

पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति, तदेवानया प्रश्नकथनव्याजेनोच्यते, लोकेहि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचिन्महान्तं वृक्षं छित्वा तक्षणादिना स्तंभादिकं संपादयति, इह तु परमेश्वरप्रेरिता जगत्स्रष्टारो यतो यस्माद्वनात् यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुः तक्षणेन द्यावापृथिव्यौ निष्पादितवन्तः तद्वनं किंस्वित् किंनाम स्यात् तथा क उ स वृक्ष आस कस्तादृशो महान् वृक्षोभूत् हे मनीषिणो मनस ईश्वरास्तदुभयं मनसा जिज्ञासायुक्तेन पृच्छतेदु पृच्छतैव किंचेश्वरो भुवनानि धारयन् यत्स्थानमध्यतिष्ठत्तदपि पृच्छत एतस्य सर्वस्याप्युत्तरं ब्रह्म वनं ब्रह्म स वृक्ष आसीदित्यादिकमुत्तरं ॥ ४ ॥

अनुवाद—पूर्व मन्त्रमें परब्रह्म परमात्मा ही आकाशादिक प्रपंचका कारण कहा, वही कथा यहां प्रश्नोत्तररूपसें कही जाती है, लोकमें प्रौढ विस्तीर्ण महेल (मकान) को बनानेवाला कोइ शिल्पि किसी विस्तारवाले जंगलमें जा करके और महान् वृक्षोंको काट करके उनमेंसे स्तम्भादिक बनाता है. 'इस् ब्रह्माण्डरूप प्रासाद (महेल) बनानेमें परमेश्वरनें जिन् शिल्पियोंको नियुक्त

किये है वे लोक जिस अरण्यमेंसे वृक्षादिकनको काट करके आकाशादिभूत-भौतिकसृष्टयात्मक प्रासादको बनानेमें तत्पर हुवे वह अरण्य और वह वृक्ष कौनसा होगा ? हे बुद्धिमान् लोकों ? इन दोनों बातोंको मनमें जिज्ञासा रखके ( किसी योग्य पुरुषसें ) पूछो. और परमात्मानें ब्रह्माण्डको धारण करनेके समय जिस स्थानको अधिष्ठित ( स्वीकृत ) किया वह बातभी तुम ( किसी योग्य पुरुषसें) पूछो. इस प्रश्नका यही उत्तर है की "परब्रह्म परमात्माही अरण्य (सदृश विस्तीर्ण होनेसें वन ) है. और विश्वका अभिन्ननिमित्तोपादान होनेंसें इस प्रपंचरूप प्रासाद कार्यमें वृक्षादिकरूप उपादानकारणभूतभी वही है" ( तै. ब्रा. २-८-९) "आत्मैवेदं सर्वं" श्रुतिभी परमात्मासें अतिरिक्त साध्य साधन और साधकका बाधरूपसें अभाव बताती हैं. ॥ ४ ॥

७०. ८ ३ १६ यातेधामानिपरमाणियावमायामध्यमाविश्वकर्मन्नुतेमा ।

शिक्षासखिभ्योहविषिस्वधावःस्वयंयजस्वतन्वंवृधानः ॥ ५॥

अनया भौवनो विश्वकर्मा जगत्कारण विश्वकर्मदेवं स्तौति–हे विश्वकर्मन् या यानि ते तव परमाणि धामानि शरीराणि सन्ति, या यानि च मध्यमानि शरीराणि सन्ति उतापि च या यानि अवमानि धामानि शरीराणि सन्ति उतापि-च तानीमानि सर्वाणि शरीराणि सखिभ्योस्मभ्यं यष्टु हविषि मयि हविर्भूतेसति शिक्ष देहि। हे स्वधावो हविर्लक्षणान्नवन्[२] स्वयमेव त्वं तन्व स्वकीयं पूर्वोक्तं त्रिविधं शरीरं वृधानो हविषा वर्धमानः सन्, अनेन धामत्रैविध्योपन्यासेन उत्तम-भूतानि देवादिशरीराणि मध्यमभूतानि मनुष्यादिशरीराणि निकृष्टभूतानि कृमि-कीटादिशरीराणि च परिगृहीतानि, किंबहुना सर्वं जगदुपात्तं भवति, उक्तव्यति-रेकेण निरवयवस्य परमेश्वरस्य विग्रहाभावात् "तदैक्षत बहुः स्या प्रजायेये" त्यादि ( छा. ६-२-३) श्रुतिभ्यः परमेश्वरस्यैव देवादिभेदेन बहुभावावगमात्॥५॥

अनुवाद–भुवन सम्बन्धी ( भुवनोंको बनानेवाला ) विश्वकर्मा जगत्का कारणरूप विश्वकर्मदेव–परमात्माकी स्तुति करता है सो इस मन्त्रसें प्रतिपादन करतें हैं–

हे विश्वकर्मन्! जो आपके परम उत्तम शरीर हैं, और मध्यम कोटि-वाले जो आपके शरीर है और अवमानि यानें अधम जो आपके शरीर है, वे शरीर (आपके) सखि यानें (पवित्र प्रेमद्वारा) आश्रित बने हुवे हमको यजन करनेके लिये (आप) प्रदान करें. जैसें अग्निमें आहुतिप्रक्षेप करनेसें अग्नि और आहुतिका अभेद होताहै, तैसेही अग्निस्थानापन्न आपके महा स्वरूपमें जीवभावापन्न मेरे स्वरूपका आहुतिरूपसें प्रक्षेप करके अभेद बनानेको आप स्वीकार करो, हविष्यरूप अन्नवाले हे परमात्मन् (यज्ञादिकमें अर्पितकिये हुवे) हविष्यसें पूर्वोक्त उत्तम मध्यम और अधम स्वरूपोंकी वृद्धि करनेवाले आपस्वयंही हैं. । इन तीनो शरीरों–स्वरूपोंसें उत्तम देवशरीर, मध्यम मनुष्यशरीर और अधम कृमिकीटादिशरीर गृहीत होतें है. विशेष कया कहें सकल प्रपञ्चका ग्रहण होता है. क्योंकी निरवयव परमात्माका शरीर देव मनुष्य और कीटादिक (प्रपंच) सें अतिरिक्त हो सक्ताही नहिं. श्रुतिभी कहेती है– "उस परमेश्वरनें ईक्षण (आत्मक संकल्प) किया की में एकही हुं, तथापि अनेक रूप हो जाउं." इत्यादिक प्रमाणोंसें परमेश्वरही देवादिक भेदसें प्रतीयमानें होता है ॥ ५ ॥

७१. ८ ३ १६ विश्वकर्मन्हविषावावृधानः स्वयंयजस्वपृथिवीमुतद्याम् ।
मुह्यन्त्वन्येअभितोजनासइहास्माकंमघवासूरिरस्तु ॥६॥

हे विश्वकर्मन् विश्वविषयकर्मन् एतन्नामक परमेश्वर! हविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा वावृधानो वर्धमानः विश्वकर्मा सर्वाणि भूतानि जुहवांचकार "सआत्मानमप्यन्ततो जुहवांचकारे" ति निरुक्तं पूर्वमुदाहृतं. स्वयमेव पृथिवीमुतापि च द्यां दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयंमवृद्ध. सन् यजस्व पूजय अन्ये मत्तोन्ये जनासो जना अयष्टारोऽस्मद्यागविरोधिनो वा मुह्यन्तु मुग्धा भवन्तु, अभितः सर्वत. अथ परोक्षकृत. इहास्मिन्यागेस्माकं मघवास्मत्प्रदत्तेन हविर्लक्षणेन धनेन धनवान् ससूरिः स्वर्गादिफलस्य प्रेरकोस्तु भवतु, अत्र विश्वकर्मन् हविषा वर्धमान इत्यादि निरुक्तद्रष्टव्य ॥ ६ ॥

अनुवाद–हे विश्वविषयककृतिवाले विश्वकर्मनामक देव! (आपके अग्निस्थानापन्न महास्वरूपमें अपनें जीवभावापन्न स्वरूपको हविष्यद्वारा अभेद

करनेकी इच्छावाले) मेंनें अर्पण किये हुवे हविष्यसें वृद्धि (प्रीति) को प्राप्त होकरके आपने सकल भूतोंका (अपनी भीतर) होम किया है याने पारमार्थिक रूपसें सकल प्रपञ्च एतदात्मक होनेसें इस परमेश्वरसें अभिन्नहीहै। निरुक्त (१०–१६) में भी कहा हैकी "उस परमात्माने अखिरमें अपने स्वरूपकोभी होमद्वारा सकल प्रपञ्चसें अभिन्न किया है"। हे परमात्मन्! यही आप पृथिवीको और आकाशको यानें अपनी शक्तिसें निर्मित किये हुवे (तदुपलक्षित) प्रपञ्चको स्वय (प्रीतिमान होकरके) यजन करें, याने हमको विपरीत भावनाद्वारा आपके स्वरूपसें प्रपञ्चकी भिन्नप्रतीति जो होती है उसको निवृत्त करके वास्तविक जैसा अभेद है तैसीही प्रतीति करानेको याने विपरीत भावना दूर करनेको आप कृपा करें और जो लोक हमारे इस (ज्ञान) यज्ञके विरोधी है (याने भेदभ्रमसें भरपुर अतःकरणवाले और हमारे इस अद्वैत मार्गमें विघ्नकरनेंवालें है) वे सर्वदा मुग्ध मोहाक्रान्त रहें। और जो इन्द्रदेव (के लक्ष्यार्थ आप) हमारे परोक्ष है सो हमनें आदरपूर्वक (अभेदके लिये) अर्पितकिये हुवे इस (जीव रूप) हविष्यसें संपन्न होकरके स्वर्गादिक (उपलक्षित आत्मानुभवात्मक निरतिशयानन्द) के आप प्रेरक होंय, यानें अभेदद्वारा हमको अबाधित सुख प्रतीत होनेके लिये आप स्वीकार करें॥ ६॥

७२, ८ ३ १६ वाचस्पतिंविश्वकर्माणमूतयेमनोजुवंवाजेअद्याहुवेम।

सनोविश्वानिहवनानिजोषाद्विश्वशंभूरवसेसाधुकर्मा॥ ७॥

वाचस्पतिं मंत्रात्मकस्य वचसः स्वामिनं विश्वकर्माणं विश्वकर्तारं मनोजुवं मनोवेगगमनं देवं वाजे यज्ञे अद्यास्मिन्दिने ऊतये तर्पणाय हुवेम आह्वयाम, स देवो नोस्माकं विश्वानि सर्वाणि हवनानि जोषत् सेवता। किमर्थं? अवसे अस्माकं रक्षणाय, स विशेष्यते–विश्वशंभूः विश्वस्य सुखस्योत्पादकः साधुकर्माच॥७॥१६॥

अनुवाद–मन्त्ररूपवाणीके स्वामी और मनके समान वेगवाले (सर्वत्र व्याप्त) जगन्नियन्ता विश्वकर्मदेवको इस (ज्ञान) यज्ञमें तृप्त होनेके लिये (हम) निमन्त्रित करतें हैं. वह विश्वकर्मा देव हमारे सकल (ज्ञानात्मक) यज्ञका उपभोग करें की जिससें हम (आत्मलाभ संपादन करके) सुरक्षित होंय। और वह विश्वकर्मा

देव सकल जगत्को सुख देनेवाला है (इससें मुझेभी निर्विशेष सुख अवश्य देगा) इससें उनको निमन्त्रित करतें हैं. ॥७॥

७३. ८ ३ १७ चक्षुषः पितामनसाहिधीरो घृतमेनेअजनन्नम्नमाने।
यदेदन्ता अददृहन्तपूर्व आदिद्द्यावापृथिवी अप्रथेताम् ॥१॥

चक्षुषः चक्षुरुपलक्षितस्येन्द्रियसंघातात्मकस्य शरीरस्य पिता उत्पादयिता यद्वा चक्षुः ख्यापकं तेजः तस्योत्पादयिता, मनसा नहि मत्समोऽस्तिकश्चिदिति बुद्ध्या हि खलु धीरो धृष्टो विश्वकर्मा प्रथमघृतमुदकमजनत् अजनयत्, "आपोवाइद-मग्रे" "अपएवससर्जादौ"इत्यादि श्रुतिस्मृती स्यातां, पश्चादेने द्यावापृथिव्यौ नम्नमाने तस्मिन्नुदके इतस्ततश्चलन्त्यौ यःअजनयत्, अथ यदेत् यदेवान्ताः पर्यन्तप्रदेशाः पूर्वे पुराणाः द्यावापृथिव्योः संबन्धिनः अददृहन्त दृढाअभवन् विश्वकर्मणा दृढाः संपादिता इत्यर्थः, आदित् अनन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां यथा कामं प्रथिते अभूतां ॥ १ ॥

अनुवाद–चक्षुरिन्द्रियोपलक्षित सकलेन्द्रियसंघातात्मक देहका उत्पन्न करनेवाला अथवा चक्षुरिन्द्रियकी ख्याति करनेवाले तेजको उत्पन्न करनेवाला (यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्, सूर्य चन्द्र अग्नि इत्यादिक तेजस्वी देवोंमें रहाहुवा तेज हमारा-नित्य प्रकाशात्मक परमेश्वरका है ऐसा श्रीमद्भगवद्गीतामें भी कहा है ) और " मेरेतुल्य दुसरा देही नहिं " ऐसी बुद्धिसें परमधीररूपसे अवस्थित इस विश्वकर्मदेवने प्रथम जलको उत्पन्न किया " जल प्रथम सृष्टिमें उत्पन्न हुवा ", इत्यादिक श्रुतिस्मृतिभी इससें संगत होती है। उसके अनंतर उस जलमें चंचलरूपसें रहेनेवाले आकाश और पृथ्वीको जिस देवने उत्पन्न किये और उन आकाश पृथ्वीके संबन्धी जो प्राचीन प्रान्त प्रदेश है उनको जिस देवनें दृढतर बनाये और जिन (प्रदेशों) के दृढ होनेसें आकाश पृथ्वी यथेष्ट ख्यातिवाले हुवे. (वह देव एकही है. ऐसा अग्रिम मन्त्रसें संबन्ध है ) ॥ १ ॥

७४. ८ ३ १७ विश्वकर्माविमना आद्विहाया धाताविधातापरमोतसंदृक्।
तेषामिष्टानिसमिषामदन्ति यत्रा सप्तऋषीन्परएकमाहुः॥२॥

विश्वकर्मा यः परमात्मा प्राणप्रकाशाभ्यामुपेतः सन् बहुकर्मा भवति सच विमनाः विभूतमनाः विहायाः वस्तुतो महान्, विशेषेण सुकृतदुष्कृतफलस्याता धाता विधाता च परमोतसन्दृक् परमश्च सन्द्रष्टेन्द्रियाणां, तेषां सप्तर्षीणां द्रष्टृणामिन्द्रियाणां इष्टानि स्वरूपाणि इषान्नेन सह संमदन्ति संमोदन्ते यत्र यस्मिन्नात्मनि, तमात्मानं सप्तर्षीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यो वा परः परस्ताद्वर्तमानमिन्द्रियाद्यतीतमेकं परमात्मानमाहुस्तत्त्वविदः. अत्रविश्वकर्मा विभूतमना व्याप्तेत्यादि निरुक्तमनुसंधेयं ॥ २ ॥

अनुवाद–जो विश्वकर्मवाच्य परमात्मा प्राण और प्रकाशसें युक्त होकरके अनेक कर्मोंका कर्ता बनता है, यानें देहेन्द्रियादिसंघातको ममत्वाभिनिवेशपूर्वक स्वीकृत करके अनेक क्रियावाला होता है, पारमार्थिक स्वरूपसें (वह परमात्मा) महान् विभु होनेपरभी अन्तःकरणरूप उपाधिहीमें अभिव्यक्त होवाहै और (प्राणिमात्रके) पुण्यपापात्मक कर्मोंके फलोंको धारण करनेवाला और तत्तदधिकारीओंको (फल) देनेवाला स्वयं निरिन्द्रिय अतीन्द्रिय होनेपरभी इन्द्रियोंका द्रष्टा–साक्षीहै, और जिस परमेश्वरात्मक अधिष्ठानमें अध्यस्त कल्पित इन्द्रियवर्ग अपनें अपनें इष्ट स्वरूपको अन्नोपलक्षित विषयोंका (निर्विघ्न) उपभोग कररहाहै सप्तसंख्यावाले यानें चक्षुरादिक पांच और मनबुद्धि सहित होकरके सप्तसंख्यावाले अथवा चंचल स्वभाववाले उस इन्द्रिय वर्गसें दूर यानें अतीन्द्रिय उस परमेश्वरको तत्त्वज्ञानिलोक "एकही है" ऐसा कहते हैं.

इस अर्थमें निरुक्तभी संमत होताहै. (नि. १०–२६) ॥ २ ॥

७५. ८ ३ १७ योनःपिताजनितायोविधाताधामानिवेदभुवनानिविश्वा।
योदेवानांनामधाएकएवतंसंप्रश्नंभुवनायन्त्यन्या ॥ ३ ॥

यो विश्वकर्मा नोस्माकं पिता पालयिता न केवलं पालकः किंच जनिता उत्पादकः किमनेनास्माकमुत्पादक इति संकोचेन, यो विधाता सर्वस्य जगत उत्पादकः यो विश्वकर्मा नोस्माकमुत्पन्नानि धामानि देवानां तेजःस्थानानि वेद वेत्ति, किंबहुना विश्वा विश्वानि भुवना भूतजातानि वेद वेत्ति, यश्च देवानामग्निवाय्वादीनां नामधाः नाम्नां धाता, इन्द्रादीन्निर्माय तेषां इन्द्रादि नाम कृत्वा तत्तदेषु स्थापयिता एकएव, तदेवं अन्यानि भुवना भूतजातानि प्रश्नं "कः परमेश्वर" इति पृच्छां यन्ति प्राप्नुवन्ति ॥ ३ ॥

अनुवाद—जो विश्वकर्मा देव हमारा पालन करनेवालाहै, केवल पालकहीहै ऐसा नहिं किंतु उत्पादक है. अगर संकोचरहित होकरके कहें तो केवल हमाराही उत्पादकहै ऐसा नहिं परंतु सचराचर विश्वका उत्पादकहै. और जो परमेश्वर देवोंके तेजःस्थानोंको यथार्थ रीतिसें जानता है, विशेष क्या कहें, समग्र भूतसमूहको यथार्थ जानता है, और जो परमात्मदेव अग्नि वायु यमादिकोंका नामाभिधान स्वयंही करताहै.

इन्द्र अग्नि वायु वरुण यम इत्यादिक देवोंका तत्तन्नामाभिधान करके जो परमेश्वर तत्तत्स्थानमें नियोग—स्थापन करनेवाला है, और स्वयं असहाय-एकही है, उस परमेश्वरदेवको अन्य भूतभौतिकवर्ग "वह परमेश्वर हमलोकोंका जो नियन्ताहै सो कौनहै?" इत्यादिक प्रश्न किया करतेहैं (परन्तु भेदभ्रम पर्यन्त उसको यथार्थ जानसक्ते नहिं) ॥ ३ ॥

७६. ८ ३ १७ परोदिवापरएनापृथिव्यापरोदेवेभिरसुरैर्यदस्ति ।

कंस्विद्गर्भंप्रथमंदध्रआपोयत्रदेवाःसमपश्यन्तविश्वे ॥ ५ ॥

यदीश्वरतत्त्वं दिवा परः द्युलोकादपि परस्तात् वर्तमानं, तथा एना अस्याः पृथिव्याः परः परस्ताद्वर्तमानं, तथा देवेभिर्देवैः परस्ताद्वर्तमानं, असुरैश्च यत् परः परस्तात् वर्तमानं, गुहायामवस्थितं, कंस्वित् गर्भं गर्भवत् सर्वस्य ग्राहकं तत्त्वमापः प्रथमं दध्रे, धृतवत्यः, यत्र यस्मिन् गर्भे देवा इन्द्रादयो विश्वे सर्वेपि समपश्यन्त, संगताः परस्परं पश्यन्ति, एवंजानन्नेव कश्चित्तत्त्ववित् प्रश्नं करोति ॥ ५ ॥

अनुवाद—"द्युलोक-आकाश अथवा स्वर्गसें पर इस पृथ्वीसें भी पर वर्तमान और देवदानवादिकसें पर वर्तमान गुहागत पदार्थकी तरह दुर्ज्ञेय और सर्वका ग्राहक जिस ईश्वरतत्त्वको जलनें अपनीभीतर गर्भकी तरह धारण किया, और जिस गर्भमें इन्द्रादिक सकल देव परस्पर संगत होकरके उस ईश्वरतत्त्वका पर्यालोचन करतेहैं" ऐसा जाननेवाला कोइ तत्त्वज्ञानी प्रश्न पूछताहै. ६ ॥

७७. ८ ३ १७ तमिद्गर्भंप्रथमंदध्रआपोयत्रदेवाःसमगच्छन्तविश्वे ।

अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुवनानितस्थुः॥६॥

— अनया पूर्वमंत्रोक्तस्य प्रश्नस्योत्तरमभिधीयते, तमित् तमेव विश्वकर्माणं गर्भं-गर्भस्थानीयं प्रथममितरसृष्टेः पूर्व मापो दध्रे धृतवत्यः। यत्र गर्भे विश्वे सर्वे देवाः इन्द्रादयः समगच्छन्त संगता भवन्ति, तस्याजस्य नाभावधि एकमर्पितमित्य-ण्डाभिप्रायेणोक्तम्, अण्डं हि प्राक् सर्गान्नाभिस्थाने तिष्ठति, यस्मिन्नण्डे विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुः तिष्ठन्ति, अथवा अजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्बन्धक उदके एकं ब्रह्माण्डमर्पितं स्थापितं, शिष्टंसमानं। अथास्मिन्नर्थेस्मृतिः—अपएवससर्जादौतासुवीर्यमवाकिरत्। तदण्ड-मभवद्धैमं सूर्यकोटिसमप्रभमिति ॥ ६ ॥

अनुवाद—पूर्व मन्त्रोक्त प्रश्नका उत्तर इस मन्त्रसें कहेतेंहैं—इतर सृष्टिके पूर्वकालमें उस "विश्वकर्म" शब्दवाच्य परमात्मदेवको गर्भरूपसें जलनें धारण किया, की जिस गर्भमें सकल देव ( इन्द्रादिक ) संगत होतेंहै, जन्मरहित जिस परमेश्वरके नाभिस्थानापन्न उदरमें एक अण्ड अवस्थित है, जिस अण्डमें सकल भूतभौतिक समुदाय स्थानको पाया हुवा है, वह अण्ड सृष्टिके पूर्वकालमें परमे-श्वरके उदरमें था। अथवा अपनी शक्तिसें निर्मित किये हुवे जलमें शयन करते हुवे और जन्मरहित जिस परमेश्वरके नाभि शब्दके लक्ष्यभूत सकल जगत्को अपनी-भीतर अवस्थित करनेवाले जलमें एक ब्रह्माण्ड स्थापित कियाहै. "परमेश्वरनें प्रथम जलहीको उत्पन्न करके उसमें वीर्याधान किया, जिससें असंख्य सूर्योंके समान तेजोमय सुवर्णके तुल्य ब्रह्माण्ड उत्पन्न हुवा" इत्यादिक स्मृतिभी इससें अनुकूल है ॥ ६ ॥

७८. ८ ३ १७ नतंविदाथयइमाजजानान्यद्युष्माकमन्तरंबभूव।
नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरन्ति ॥७॥१७॥

हे नरास्तं विश्वकर्माणं न विदाथ न जानीथ य इमा इमानि भूतानि जजान उत्पादितवान्, देवदत्तोहं यज्ञदत्तोहमिति वयमात्मानं विश्वकर्माणं जानीम इति यदुच्यते तदसत्, नह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वं, किन्तु युष्माकमहंप्रत्ययगम्यानां जीवानामन्तरं अन्यत् अहंप्रत्ययगम्यादतिरिक्तं सर्वं वेदान्तवेद्यमीश्वरतत्त्वं बभूव भवति विद्यते, जीवरूपवत्तदपि कुतो न विद्मइति चेत् श्रूयतां—नीहारेण प्रावृता यूयं नीहारसदृशेनाज्ञानेन आच्छन्नाः अतो न जानीथ,

यथा निहारो नात्यन्तमसद् दृष्टेरावरकत्वात्, नात्यन्तं सत् काष्ठपाषाणादिवत्संबोद्धुमयोग्यत्वात्, एवमज्ञानमपि नात्यन्तमसत्, ईश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात्, ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। नकेवलं प्रावृतत्वं किन्तु जल्प्या च, देवोहं मनुष्योहमित्याद्यनृतजल्पनेन प्रावृताः। किंच असुतृपः केनाप्युपायेनासून्प्राणान् तृप्यन्तः उदरंभरा इत्यर्थः, नतु पारमेश्वरं तत्त्वं विचारिनवन्तः, नकेवलमिहलोके भोगमात्रतृप्ताः उक्थशासः नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शंसन्तश्चरन्ति, पृथिव्यां वर्तन्ते, केवलमैहिकामुष्मिकभोगपरा वर्तध्वे, अतो विश्वकर्माणं देवं न जानीथेत्यर्थः ॥ ७ ॥ १७ ॥

**अनुवाद**–हे पुरुषो ? उस् विश्वकर्मदेवको (तुम) नहि जानते, जिस् विश्वकर्मदेवने इन् भूतोंको उत्पन्न कियें हैं. "मैं देवदत्त हुं, मैं यज्ञदत्त हुं," इत्यादिक रूपसें हम आत्मस्वरूप विश्वकर्मदेवको जानते हैं? यह कहेना ठीक नहिं, क्योंकी अहमाकारप्रतीतिका विषयभूत जो जीवस्वरूप है सो विश्वकर्म वाच्य परमेश्वरका पारमार्थिक स्वरूप नहि है, परंतु अहमाकारप्रतीतिके विषयभूत जीव स्वरूपसें वेदान्तवेद्य वह पारमार्थिक तत्त्व अतिरिक्त है, जीवात्माके स्वरूपकी तरह उसको हम क्यों नहिं जानते? सुनो, तुमलोक नीहारसदृश अज्ञानसें आवृत हो गये हो, इससें यथार्थ नहिं जान सक्ते, जैसें नीहार (तुषार) दृष्टिको आवृत करता है इस लिये अत्यन्त असत् नहिं है, क्योंकी असत् होता तो आवरण कैसे करसका? उसी तरह काष्ठपाषाणादिककी तुल्य अत्यन्त सत् भी नहिं है, अगर सत् होता तो काष्ठादिककी तरह दानादानादिक व्यवहारका विषय बनता, इस लिये "सत्" और "असत्" इन् दोनोंसे विलक्षण कहेना चाहिये, तैसेही अज्ञानभी अत्यन्त "असत्" नहिं है, क्योंकी पारमार्थिक स्वरूपको आवृत कररहा है, और अत्यन्त "सत्" भी नहिं है, क्योंकी केवल ज्ञानमात्रसें निवृत्त-बाधित होता है, इससे सत्त्व और असत्वसें विलक्षण यानें अनिर्वचनीय अज्ञानसें तुम सब जीव दृढतर आवृत–प्रच्छन्न होगयेहो, मात्र आवृतनहीं होगये हो इतनाही नहिं, किंतु मैं देवहुं मैं मनुष्यहुं अमुकशर्माका पुत्रहुं इत्यादिक व्यर्थ वादपरायण हो, यानें व्यवहाराविषय पारमार्थिकस्वरूप होने परभी उसको छीपाकरके देहेन्द्रियादिसंघातकोही आत्मा समझके "मैं" और "मेरा" इत्यादिक व्यवहार किया करतेहो, और प्राणपोषणको परम पुरुषार्थ

समझके यत्न किया करते हो, यानें हमेशां पेटही भरनेकी फिकर रखते हो, परंतु पारमार्थिक तत्त्वके विचारार्थ कभी प्रवृत्ति करतेही नहिं, और केवल इसलोकहीमें भोगतृप्त नहिं हो, लेकिन यज्ञयागादिक संपादन करके पारलौकिक भोगमें भी मुस्तेइद हो, यानें आत्मविचारणासे शून्य होकरके केवल ऐहिक और आमुष्मिक (पारलौकिक) भोगोंको संपादन करनें हीं में भ्रान्तिद्वारा बहिर्मुख वृत्तिवाले बनके इधर उधर परिभ्रमण किया करते हो, यह सब उपाय उस विश्वकर्मदेवविषयक पारर्थिकज्ञानका बाधक है साधक नहिं है. ॥ ७ ॥

७९. ८ ४ १७ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।

सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोयं सहस्रशीर्षा सहस्रशब्दस्य उपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वं, एवंसहस्राक्षित्वं, सहस्रपादत्वंच । स पुरुषो भूमिं ब्रह्मांडगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्टय दशांगुलं दशागुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशांगुलमित्युपलक्षणं ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥ १ ॥

अनुवाद–सकलप्राणिसमष्टिरूप " विराट् " नामक ब्रह्माण्डदेहात्मक जो यह पुरुष है सो अनन्त मस्तकोंसे युक्त है, यानें सकल प्राणिवर्गके जितनें मस्तक है वे सब मस्तक तत्तद् शरीरमें अनुप्रविष्ट प्रतीत होनेंसे इसी परमेश्वरके मस्तक हैं, ऐसा व्यपदेश किया जाता है. उसी तरह सकल प्राणिवर्गके जितने नेत्र और चरणादिक अवयवहैं वे सब परमात्माके तरफ व्यपदेशद्वारा समझे जातेहै । वह पुराणपुरुष ब्रह्माण्डगोलकरूप भूमिको चारो तरफसें परिवेष्टन करके दश अंगुल परिमित देशको अतिक्रमण करके व्यवस्थित हुवाहै, याने ब्रह्माण्डके बहार और भीतर सर्वत्र व्याप्त होकरके अवस्थित है. ॥ १ ॥

८०. ८ ४ १७ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यम् ।

उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥

यदिदं वर्तमानं जगत्तत्सर्वं पुरुष एव, यच्च भूतमतीतं जगत् यच्च भव्यं भविष्यज्जगत् तदपि पुरुषएव, यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उतापिच अमृतत्वस्य देवत्वस्यायमीशानः स्वामी, यद्यस्मात् कारणात् अन्नेन प्राणिनामन्नेन भोग्येन निमित्तेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति, तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुतत्त्वमित्यर्थः ॥ २ ॥

अनुवाद–जो यह वर्तमान भूत और भविष्यदात्मक जगत् है वह सब पुराण पुरुष रूपही है, जैसें इस कल्पमें वर्तमान प्राणिमात्रके शरीर विराट् पुरुषके अवयवभूत हैं तैसेही व्यतीत–भूत और अनागत-भविष्यत् प्राणिमात्रके देह उस विराट् पुरुषके अवयवभूतही हैं. और यह विराट् पुरुष अमृतत्वका स्वामी है, प्राणिमात्रके भोगोपभोगके लिये अपनी कारणावस्थाको छोडकरके दृश्यमान कार्यावस्था यानें प्रपञ्चस्वरूपताको प्राप्त हुवा है, यानें प्राणिसमूहको कर्मफलोपभोग करानेके लिये इसनें जगत्स्वरूप स्वीकृत किया है, उस विराट् पुरुषका पारमार्थिक स्वरूप तो कोइ विलक्षणही है. ॥ २ ॥

८१. ८ ४ १७ एतावा॑नस्यमहि॒माऽतो॒ज्याया॑ँश्च॒पूरु॑षः ।
पादो॑ऽस्य॒विश्वा॑भू॒तानि॑त्रि॒पाद॑स्या॒मृतं॑दि॒वि ॥ ३ ॥

अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान् सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः नतु तस्य वास्तवं स्वरूपं, वास्तवस्तु पुरुषः, अतो महिम्नोऽपि ज्यायानतिशयेनाधिकः। एतच्च उभयं स्पष्टीक्रियते–अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थोंशः, अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इतिशेषः। यद्यपि " सत्यंज्ञानमनन्तंब्रह्म " त्याम्नातस्य तस्य परब्रह्मण इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥ ३ ॥

अनुवाद–भूत, भविष्यत् और वर्तमान जितना प्रपंच है, वह सब इस ( विराट् ) पुरुषका सामर्थ्यातिशय है, उस पुरुषका वास्तविक स्वरूप यह

प्रपंच नहिं है, वास्तविक स्वरूपतो पुरुषरूपही है, इसलिये महिमासेंभी अत्यन्त अधिक है, इन दोनों बातोंको स्पष्ट करते हैं–भूत भविष्यत् और वर्तमान इन तीनो कालके प्राणिसमूह इस पुरुषका चतुर्थ अंश है, और इस पुरुषका अवशिष्ट जो अंशत्रय सो नाशरहित है, और दिव्य यानें स्वप्रकाश है. यद्यपि "सत्यं ज्ञानमनन्तंब्रह्म" इत्यादिक श्रुतिके अनुसार ब्रह्मस्वरूप देशकाल और वस्तुसें अपरिच्छिन्न होनेंसें उस ( ब्रह्म ) का पाद ( अंश ) चतुष्टय निरूपण करनेको अशक्य है, तथापि "ब्रह्म स्वरूपकी अपेक्षासें यह सकल प्रपंच अल्प है" इस अर्थको प्रतिपादन करनेंके लिये पाद (अंश) त्वका उपन्यास है, यानें प्रपंचकी भीतर रूपकद्वारा चतुर्थांशत्वरूप न्यूनत्व प्रदर्शित करके परब्रह्मका भूमत्व कहने के लिये यह अंशांशिभावकल्पना है. ॥ ३ ॥

८२. ८ ४ १७ त्रिपादूर्ध्वउदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥

योयं त्रिपात्पुरुषः संसारस्पर्शरहितः ब्रह्मस्वरूपः योयमूर्ध्वः उदैत् अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् तस्यास्य सोयं पादोलेशः सोयमिह मायायां पुनरभवत् सृष्टिसंहाराभ्यां पुनःपुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं–विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितोजगदिति । ततः मायायामागत्यानन्तरं विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा? साशनानशने अभिलक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातं लक्ष्यते, अनशनं तद्रहितमचेतनं गिरिनद्यादिकं, तदुभयं यथास्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥

अनुवाद–दिव्य और अविनाशि पाद (अंश) त्रय वाला संसारसंसर्गशून्य ब्रह्मस्वरूप अविद्याकार्यसंसारसें बहिर्भूत यानें संसारान्तर्गत गुणदोषसमुदायसें असंपृक्त सर्वोत्कृष्ट जो यह पुरुष है इस पुरुषका एकही यह पाद (अंश अथवा लेश) इस मायामें उत्पत्ति और संहाररूपसे वारंवार गमनागमनको पाता है, यानें उत्पत्ति और नाशको पानेवाले घटपटादिक पदार्थ उस पुरुषकी सत्तासें अतिरिक्त सतावाले नहिं है, श्रीकृष्णनेंभी जगत्को ईश्वरांश बताया है "मैं ( परिपूर्ण सच्चिदानन्दघन ) एक अंशसें इस समग्र प्रपंचको व्याप्त करके

रहाहुं" । उसके बाद मायामें अवस्थित हो करके यानें मायास्वरूपका स्वीकार करके देव, मनुष्य, पशु, पक्षी इत्यादिक विविधरूपसें विश्वमें व्याप्त हुवा, यानें भोजनादिव्यवहारसहित सचेतन प्राणिवर्ग और अनशन–भोजनादिव्यवहार-रहित अचेतन गिरिनदी इत्यादिक सकल विविधस्वरूपसें (एक अंशद्वारा) वह पुरुष सचराचरमें व्याप्त हुवा ॥ ४ ॥

८३. ८ ४ १७ तस्मा॑द्विरा॒ळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।

स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ५ ॥ १७ ॥

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपंच्यते–तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्नः, विविधानि राजन्ते वस्तून्यत्रेतिविराट्, विराजोधि विराड्देहस्योपरि तमेव देहमधिकरणंकृत्वा, पुरुषः तद्देहाभिमानी कश्चित् पुमानजायत, सोयंसर्ववेदान्तवेद्यः परमात्मा सएव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति-"सवाएषभूतानीन्द्रियाणि विराजं देवताः कोशांश्चसृष्ट्वा प्रविश्यामूढोमूढइव व्यवहरन्नास्तेमायये"ति। स जातो विराट् पुरुषः अत्यरिच्यत अतिरिक्तोभूत् विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोभूत्, पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेतिशेषः. अथो भूमेः सृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज, पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ५ ॥ १७ ॥

अनुवाद–पूर्व मन्त्रमें देवमनुष्यतिर्यगादिक विविध स्वरूप जो कहे हुवेहैं उसीबातको विस्तारसें कहते हैं–उस आदि पुरुषसें विराट् ब्रह्माण्डदेह उत्पन्न हुवा, विविध प्रकारसें अनेक पदार्थ जिसमें विराजमान हो उसको "विराट्" कहतेहैं । उस विराट् देहकी भीतर उस (देह) का अभिमानी कोइ पुरुष उसी (विराड्देह) में प्रतीत हुवा, उसी (अभिमानी) पुरुषको समग्र वेदान्तका वेद्य बतातेहैं, वही पुरुष अपनी मायासें विराट् देहात्मक ब्रह्माण्डको उत्पन्न करके और उसी देहमें जीवस्वरूपसें प्रविष्ट होकरके सकलब्रह्माण्डका अभिमानी देह "जीव" ऐसे अभिधानको प्राप्त हुवा. इसी बातको आथर्वणिक लोक उत्तर-तापनीयोपनिषद्में स्पष्ट कहतेहैं ॥ वही परमात्मा भूत इन्द्रियवर्ग विराड्देह तत्तदिन्द्रियादिककी देवता और अन्नमयादिक पञ्चकोशोंको प्रकट करके और

उसी समुदायमें स्वयं प्रविष्ट हो करके नित्यप्रकाश ज्ञानस्वरूप होते हुवेभी मूढकी तरह मायासें व्यवहार करता हुवा अवस्थित है." विराड् देहमें प्रादुर्भावको पायाभया यह तदभिमानी देव विराड् देहसें अतिरिक्त है, देव मनुष्य तिर्यगादि विविध रूपसें प्रतीत होताहै. देवमनुष्यादि करके (व्यष्टि) शरीरमें जीवभावापन्न होनेकेबाद भूमिको वह (देव) उत्पन्न करता भया, और भूमिके बाद उन् जीवोंके निवास योग्य शरीरोंको रसादिक सप्त धातुओंसे उत्पन्न करता भया ॥ ५ ॥

८४. ८ ४ १८ यत्पुरुषेणहविषादेवायज्ञमतन्वत ।

वसन्तोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ ६ ॥

यद्यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात् पुरुषरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वत अतानिषत, तदानीमस्य यज्ञस्य वसन्तो वसन्तर्तुरेवाज्यमासीत् अभूत् तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः, एवं ग्रीष्म इध्म आसीत् तमेवेध्मत्वेन संकल्पितवन्तः, तथा शरद्धविरासीत् तामेव पुरोडाशाभिधहविष्ट्वेन संकल्पितवन्त इत्यर्थः। एवं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः, अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यं ॥६॥

अनुवाद–जिस समय पूर्वोक्त क्रमसें समग्रदेह उत्पन्न हो चुके उसके बाद उत्तर सृष्टिकेलिये बाह्य द्रव्यकी उत्पत्ति न होनेंसे और हविष्यान्तरके अभाव होनेंसे देवोंनें पुरुषस्वरूपहीको हविष्यके तौर पर संकल्पित करके मानस यज्ञका विस्तार किया. उस समय उस मानस यज्ञमें वसन्त ऋतुको आज्य (हवन करनें योग्य घृत) स्वरूपसें संकल्पित किया, और ग्रीष्मऋतुको समिद्रूपसें संकल्पित किया, और शरदृतुको पुरोडाशादिक हविष्यरूपसें संकल्पित किया, यानें "प्रथम पुरुषस्वरूपका हविष्यसामान्य रूपमें संकल्प करनेके बाद वसन्तादिक ऋतुओंको आज्यादिविशेष स्वरूपसें (देवोंनें) संकल्पित किये" ऐसा समझना.॥६॥

८५. ८ ४ १८ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ।

तेनदेवाअयजन्तसाध्याऋषयश्चये ॥ ७ ॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे, प्रौक्षन् प्रोक्षितवन्तः, कीदृशमित्यत्राह-अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नं, एतच्च प्रागेवोक्तं "तस्माद्विराळजायत विराजो अधिपूरुषः" इति। तेन पुरुषरूपेण पशुना देवा अयजन्त, मानसयागं निष्पादितवन्त इत्यर्थः, के ते देवा इत्यत्राह-साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूला ऋषयो मंत्रद्रष्टारश्च ,ये सन्ति ,ते सर्वेऽप्ययजन्त इत्यर्थः ॥ ७ ॥

अनुवाद-सृष्टिके पूर्वकालमें प्रादुर्भूत और यज्ञीय कर्ममें साधनभूत उस पुरुषको पशुत्व भावनासे यूप ( यज्ञीयपशु बन्धनस्थान ) में (से) बद्ध करके मानसिक यज्ञमें देवतालोक प्रोक्षण करनेलगे. यह कथा पञ्चममन्त्रमें कहचुके हैं की "उस आदि पुरुषसे ब्रह्माण्डदेह उत्पन्न हुवा और इसी देहमें तदभिमानी कोइ पुरुष प्रतीयमान हुवा"। इस पुरुषरूपपशुसे देवताने मानसयाग सिद्ध किया, सृष्टिके साधनमें तत्पर प्रजापति वगैरह और उनके अनुकूल मन्त्रद्रष्टा ऋषि लोक जो हैं वे सभी लोक मानस याग करने लगे. ॥ ७ ॥

८६. ८ ४ १७ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।
पशूंस्तांश्चक्रे वायव्यां नारण्यान्ग्राम्याश्चये ॥ ८ ॥

सर्वहुतः सर्वात्मकः पुरुषो यस्मिन्यज्ञे हूयते सोऽयं सर्वहुतः तादृशात् तस्मात् पूर्वोक्तात् मानसाद्यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितं दधि चाज्यं चेत्येवमादि भोगजातं सर्वं संपादितमित्यर्थः, तथा वायव्यान् वायुदेवताकान् लोकप्रसिद्धान् आरण्यान्पशूंश्चक्रे उत्पादितवान् आरण्या हरिणादयः। तथा येच ग्राम्या गवाश्वादयस्तानपि चक्रे ॥८॥

अनुवाद-सर्वात्मक पुरुषका जिसमें यजन होता है ऐसे इस मानसिक यज्ञमें दधिमिश्रित आज्य (घृत) संपादित हुवा, यानें यह उपलक्षण है, दधि और आज्यको आदि लेकरके सकल भोग्यसमूह संपादित किया. और वायु-देवतावाले हरिणादिक जंगली प्राणीओंको संपादित किये, और जो ग्राम्य पशु गौ अश्व महिष्यादिक हैं उनकोभी संपादित किये. ॥ ८ ॥

८७. ८ ४ १८. तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥

सर्वहुतस्तस्मात्पूर्वोक्ताद्यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नाः, तस्माद्यज्ञात् छन्दांसि गायत्र्यादीनि जज्ञिरे तस्माद्यज्ञात् यजुरप्यजायत ॥९॥

अनुवाद–सर्वहुत नामक उसी मानसयज्ञमें ऋग्वेद और सामवेद प्रादुर्भावको पाये, और उसी यज्ञमें गायत्री उष्णिक् बृहतीत्यादिक छन्द भी प्रादुर्भावको पाये, यजुर्वेदभी उसी यज्ञहीसें प्रादुर्भूत हुवा ॥ ९ ॥

८८. ८ ४ १८. तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥१०॥१८॥

तस्मात्पूर्वोक्ताद्यज्ञात् अश्वा अजायन्त उत्पन्नाः, तथा ये के चाश्वव्यतिरिक्ता गर्दभा अश्वतराश्चोभयादत ऊर्ध्वाधोभागयोः उभयोर्दन्तयुक्ताः सन्ति येषां तेपि तस्मादजायन्त, तथा तस्माद्यज्ञात् गावश्च जज्ञिरे, किंच तस्माद्यज्ञादजा अवयश्च जाताः ॥ १० ॥ १८ ॥

अनुवाद–उसी पूर्वोक्त यज्ञमें अश्व प्रादुर्भावको पाये, और जोकी अश्वातिरिक्त गर्दभ अश्वतरादिक (मुखान्तर्गत) उपरनीचे दोनों जगापर दन्तवाले पशु उष्ट्रादिक वेभी उसी यज्ञसें प्रादुर्भूत हुवे. और उसी यज्ञमेंसे गो अज अवि यानें गैया बकरी भेडी (भेडी) इत्यादिक सब प्रादुर्भूत हुवे ॥ १० ॥

८९. ८ ४ १९ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनांप्रश्नाउच्यन्ते-प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः, अस्य पुरुषस्य मुखं किमासीत, कौ बाहू अभूतां, का ऊरू, कौ च पादौ उच्येते, प्रथमं सामान्यरूपप्रश्नः पश्चात् मुखं किमित्यादिना विशेषविषयाः प्रश्नाः ॥ ११ ॥

अनुवाद–प्रश्नोत्तररूपसें ब्राह्मणादिककी सृष्टिको प्रतिपादन करनेके लिये ब्रह्मवादियोंके प्रश्न कहतेहै–प्रजापतिके प्राणरूप देव जिस समय उस् विराट् पुरुषको संकल्पित करते भये उस् समयमे कितने प्रकारसें कल्पना हुइ, इस पुरुषका मुख क्या था? उस् पुरुषके बाहुद्वय कौन थे? और ऊरुद्वय तथा पादद्वय कौन थे? यह प्रश्न पहिले सामान्यरूपसें कहेकरके इसके बाद मुखादिकअवयवविषयक विशेष प्रश्न है. ॥ ११ ॥

९०. ८ ४ १९ ब्राह्मणो॑ऽस्य॒ मुख॑मासीद्बा॒हू रा॑ज॒न्यः॑ कृ॒तः ।

ऊ॒रू तद॑स्य॒ यद्वैश्यः॑ प॒द्भ्यां शू॒द्रो अ॑जायत ॥ १२ ॥

इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति–अस्य प्रजापते र्ब्राह्मणो ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीत् मुखादुत्पन्न इत्यर्थः, योय राजन्यः क्षत्रियत्वजातिविशिष्टः स बाहूकृतः बाहुत्वेन निष्पादितः बाहुभ्यामुत्पादित इत्यर्थः, तत्तदानीमस्य प्रजापतेः यद्यौ ऊरू तद्रूपो वैश्यः संपन्नः ऊरुभ्यामुत्पन्न इत्यर्थः, तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषोजायत, इयंतु मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः यजुःसंहितायां सप्तमकाण्डे" समुखतस्त्रिवृतंनिरमिमीत " इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये ॥ १२ ॥

अनुवाद–अब पूर्वोक्त प्रश्नके उत्तर कहते है–ब्राह्मणत्वजातिवाला पुरुष इस् प्रजापति ( परमात्मा ) का मुख है, यानें ब्राह्मणोंको मुखसें प्रकट कियें है. क्षत्रियत्व जातिवाला पुरुष इस ( प्रजापति ) का बाहु ( हस्त ) है, यानें क्षत्रियोंको बाहुद्वयसें प्रादुर्भूत कियें है. ऊरुद्वयसें वैश्यका प्रादुर्भाव किया है. और चरणद्वयसें शूद्रका प्रादुर्भाव किया है. मुखादिकसें ब्राह्मणादिकके प्रादुर्भावका यजुःसंहिताके सप्तमकाण्डमें स्पष्ट कथन कियाहै, "परमेश्वरने मुखसें त्रिवृतका निर्माण किया " इत्यादि । इस लिये इन् प्रश्न और उत्तरोंका इसीमें तात्पर्य है ॥ १२ ॥

९१. ८ ४ १९ च॒न्द्रमा॒ मन॑सो जा॒तश्चक्षोः॒ सूर्यो॑ अजायत ।

मुखा॒दिन्द्र॑श्चा॒ग्निश्च॑ प्रा॒णाद्वा॒युर॑जायत ॥ १३ ॥

यथा दध्याज्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्नाइत्याह—प्रजापतेर्मनसः सकाशात् चन्द्रमा जातश्चक्षोश्चक्षुः सूर्योऽप्यजायत, अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ, अस्य प्राणाद्वायुरजायत॥ १३ ॥

अनुवाद—जैसें दधिघृतादिक द्रव्य गैयाअजादिक पशु ऋगादिक वेद ब्राह्मणादि मनुष्य यह सब उस परमेश्वरसें प्रादुर्भूत हुवे हैं तैसेंही चन्द्रादिक देवभी उसी (परमेश्वर) सें प्रादुर्भाव पाये हुवे हैं ऐसा कहते हैं—उस प्रजापति (परमेश्वर) के मनसें चन्द्र प्रादुर्भूत हुवे, और चक्षुसें सूर्य प्रादुर्भूत हुवे. और मुखसें इन्द्र और अग्नि, और प्राणसे वायु यह सब प्रादुर्भूत हुवे॥१३ ॥

९३. ८ ४ १९ नाभ्याआसीदन्तरिक्षंशीर्ष्णोद्यौः समवर्तत।
पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँअकल्पयन् ॥१४ ॥

यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्योकल्पयन्, तथान्तरिक्षादीन् लोकान् प्रजापतेर्नाभ्यादिभ्यो देवा अकल्पयन् उत्पादितवन्तः, एतदेवदर्शयति—नाभ्याः प्रजापते र्नाभेरन्तरिक्षमासीत्, शीर्ष्णः शिरसो द्यौः समवर्ततोत्पन्ना, अस्य पद्भ्यां भूमिरुत्पन्ना, अस्य श्रोत्राद्दिश उत्पन्ना इति ॥ १४ ॥

अनुवाद—जैसें चन्द्रादिकके प्रादुर्भावकी कल्पना देवोंनें प्रजापति (परमेश्वर) के मनआदिक इन्द्रियोंसे की है तैसेंही अन्तरिक्षादिक लोकोंकोभी देवोंनें प्रजापतिके नाभ्यादिक अवयवोंसे सकल्पित किये हैं, सो कहतेहै—उस प्रजापति की नाभिसे अन्तरिक्ष लोक प्रकट हुवा. मस्तकसें द्युलोक (स्वर्ग) प्रकट हुवा. चरणद्वयसें भूलोक प्रकट हुवा, और इस प्रजापति (परमेश्वर) के श्रोत्र (कर्ण) सें दिशायें प्रकट हुई ॥ १४ ॥

९३. ८ ४ १९ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधःकृताः।
देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुम् ॥ १५ ॥

अस्य साङ्कल्पिकस्य यज्ञस्य गायत्र्यादीनि सप्तच्छंदांसि परिधय आसन्, ऐष्टिकस्याहवनीयस्य त्रयः परिधयः, उत्तरवेदिकास्त्रयः, आदित्यश्च सप्तमः परिधिः

प्रतिनिधिरूपाः, अतएवाम्नायते "नपुरस्तात्परिदध्यादित्यादित्योह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ती"ति। तत एते आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छंदोरूपाः, तथा समिध त्रिसप्त त्रिगुणिताः सप्तसंख्याका एकविंशतिः कृताः। द्वादश मासा पंच ऋतव इमे लोका असावादित्य एकविंश इति. एते पदार्था. एकविंशतिदारुयुक्तेध्मत्वेन भाविताः यद्यः पुरुषो वैराजोऽस्ति तंपुरुषं देवः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः, एतदेवाभिप्रेत्य पूर्वत्र पुरुषेण हविषेत्युक्तम् ॥ १५ ॥

अनुवाद–संकल्पसिद्ध इस मानस यज्ञके गायत्र्यादिक सप्तच्छन्द परिधि (तेजोमण्डलस्थानापन्न) थे, यानें ऐष्टिक जो आहवनीय है, उनके तीन परिधि और तीन उत्तर वेदिका और सप्तम परिधि सूर्य, यह सब प्रतिनिधिरूप हैं. श्रुतिमेंभी कहा है की– "अग्र भागमें परिधान करना नहिं, क्योंकी उदयाभिमुख सूर्य अग्र भागमेंसे राक्षसोंका संहार करतेहैं." इस लिये गायत्र्यादिक सप्तछन्द आदित्य सहित सप्त परिधि है, और एकवीस समिध है. १२ मास ५ ऋतु भूरादि ३ लोक और १ सूर्य यह सब पदार्थ समिधरूपसें संभावित किये हैं. जो वैराज पुरुष है उसको प्रजापति प्राण और इन्द्रियरूप देव मानस यज्ञ निमित्त पशुत्वकी भावनासें यज्ञीय यूपमें बन्धन करने लगे. इसी अभिप्रायसें पूर्वमें पुरुषकोही विषय कहाहै, नरमेध करनेके लिये पुरुषको पशु कहा नहिं है ॥ १५ ॥

९४. ८ ४ १९ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन्।
तेहनाकंमहिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः॥१६॥ १९ ॥

पूर्वं प्रपंचेनोक्तमर्थं संक्षिप्यात्र दर्शयति–देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः, तस्मात्पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यभूतान्यासन्, एतावता सृष्टिप्रतिपादितसूक्तभागार्थः संगृहीतः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते–यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति, तन्नाकं विराट्-

प्राप्तिरूपं स्वर्गं ते महिमानः तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥ १६ ॥ १९ ॥

अनुवाद-प्रथम विस्तारसें कहे हुवे अर्थको अब संक्षेपसें कहतें हैं-प्रजापति और प्राणरूप देव मानस संकल्पसें पूर्वोक्त यज्ञस्वरूप प्रजापति (परमेश्वर) का यजन करते भये, इस् यजन (पूजन) सें प्रपंचरूप विकारोंको धारण करनेंवाले सुप्रसिद्ध मुख्य धर्म प्रचलित हुवे. इस् अर्थसें सृष्टि प्रतिपादित सूक्तभागका अर्थ गृहीत हुवा। अब उपासना और उसके फलको अनुवाद करनेवाला भाग संगृहीत करतेंहै- जिस् विराट् (परमेश्वर) की प्राप्तिरूप स्वर्गमें साध्य-विराड्की उपासना करनेवाले प्राचीन देव अवस्थित है परमेश्वरकी प्राप्तिरूप उस स्वर्गको उस विराट्की उपासना करनेवाले महात्मा लोक अवश्य प्राप्त होतें है. ॥ १६ ॥ १९ ॥

९५. ८ ६ १६ घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम।
दिवस्पयो दिधिषाणा अवेषन्विदुर्देवाः सहसामानमर्कम्॥१॥

समंतौ संगतौ घर्मौ स्वयंदीप्यमानौ जीवेश्वरौ त्रिवृतं सत्त्वरजस्तमोगुणात्मिकां माया व्यापतुः नियन्तृनियन्तव्यभावेन। मातरिश्वा परमात्मा तयोर्जुष्टिं संभोक्तव्यपदार्थैः संजातां प्रीतिं जगाम गतवान्, तं परमात्मानं वेदमयम् इमं "सूर्यम्" इति देवा जानन्ति ॥ १ ॥

अनुवाद-हमेशां साथ रहनेवाले और स्वयंप्रकाशरूप जीव और ईश्वर नियम्यानियन्तृभावसें सत्व रज और तमः इन् तीन गुणवाली मायाको व्याप्त करते भये, अर्थात् ईश्वर मायाको वश करके उसका नियन्ता, और जीव मायाका वशीभूत होके उसका नियम्य बना, और परमात्माकी जो सोपाधिक चेतनात्मक जीवेश्वरसें पर है सो उन् दोनोंकी तत्तत्कार्यविषयक प्रवृत्तिको जानते भये. उस वेदमय परमात्माको "यह सूर्य है" ऐसा देवतालोक जानतें है. १ ॥

९६. ८ ६ १६ तिस्रोदेष्ट्राय निर्ऋतीरुपासतेदीर्घश्रुतोविहिजानन्ति वह्नयः।
तासांनिचिक्युःकवयोनिदानंपरेषुयागुह्येषुव्रतेषु ॥ २ ॥

निर्ऋतीः निःशेषेण ऋच्छंति गच्छन्तीति निर्ऋतयः तास्तिसः सृष्टिस्थितिसंहृतीः देष्टू य आत्मनः कर्मभोगदानाय उपासते, ते दीर्घश्रुतः दीर्घं संसारे श्रृण्वतः मन्त्रव्यहस्यादिदार्थं जानन्तः मंत्रद्रष्ट्यादिरूपमजानन्त इत्यर्थः। अतएव बह्वयः संसारस्य वोढार. ता न जानन्ति, कवयः कान्तदर्शिनस्तु तासा सृष्ट्यादीनामग्न्यादीनां वा निदानं मूलकारणं परमात्मानं निचिक्यु नितरां चिन्वन्ति जानन्ति, परेषु उत्कृष्टेषु वा गुह्येषु गोप्यव्येषु कर्मसु यमनियमादिषु व्रतेषु याः प्रवृत्तयः सन्ति तासा निदानं निचिक्युः जानन्ति. ॥ २ ॥

अनुवाद–वेदान्तशास्त्रोपदिष्टसाधनसमूहद्वारा तत्त्वदृष्टिको न संपादन करनेसें आदिभूत परमेश्वरको यथार्थ नहिं जाननेवाले और इसी लिये समग्र प्रपंचका अवास्तविक भारको ढोने ( उठाने ) वाले अज्ञ लोक इहवर्गान्तर्गत किसी एक अनुत्तम पदार्थके ज्ञानसें अपनें को कृतार्थ मान करके कर्मफलोपभोगार्थ ( देहकी ) उत्पत्ति स्थिति और प्रलयरूप निर्ऋतिकी उपासना करतेंहै, यानें आत्मसाक्षात्कारमें विमुख होकर बाह्यवृत्तिद्वारा शोभनाध्यासमें तत्तत्पदार्थकी प्राप्तिमें कृतार्थता मानते हुवे विविध योनियोंमें जन्म लेनेके बाद पूर्वोपार्जित पुण्यपापके फलको तत्तत् लोकमें स्थित होकरके भोगतें है, और फलके अवसानमें स्वयंभी अवसन्न होकरके प्रलयात्मक मृत्युको प्राप्त होतें है. एवं जन्मानन्तर मरण और मरणानन्तर जन्मको हमेशा पाते रहतें है. लेकिन् अन्तर्मुखवृत्तिद्वारा आत्मसाक्षात्कारमें प्रवृत्त होवे नहिं. और कवि–क्रान्तदर्शी सम्यग्ज्ञानवाले महात्मा लोक सृष्टि और संहारका कारण अथवा अग्न्यादिकका कारणरूप परमेश्वरको यथार्थ रीतिसें जानतें है, और उत्कृष्ट अथवा गुप्त जो जपादिक कर्म है, किंवा यमनियमादिक अथवा ब्रह्मचर्यादिव्रतोंमें जो प्रवृत्ति है सो किंनिमित्तक है ! यानें उस प्रवृत्तिका उद्देश क्या है ? उस उद्देशकोभी परमात्मरूपही जानतें है, यानें जपादि यमनियमादिक साधनसमूहसें चित्तवृत्तिकी एकाग्रता द्वारा परमात्मस्वरूप परमपदकी प्राप्ति होती है ऐसा ज्ञानी लोक समझतें है, और अज्ञानीलोकनकी भावना इससें विपरीत होती रहती है. ॥ २ ॥

९७. ८ ६ १६ चतुंष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् ॥३॥

चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीया यस्या सा युवति स्तरुणी नित्या घृतप्रतीका दीप्यमानवर्णावयवा एषा औपनिषदी वाक् वयुनानि ज्ञानानि वस्ते आच्छादयति, तस्यां वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ निषण्णौ भवतः, यया वाचा देवा भागं धारयन्ति ॥ ३ ॥

अनुवाद—शब्द तिङ्प्रत्ययान्त धातु उपसर्ग और निपात (अव्यय) एतच्चतुष्टयात्मक वर्णवृन्दरूप कबरी (वेणी) को धारण करनेवाली और देदीप्यमान वर्णरूपअवयववाली और पूर्ण यौवनवाली यह उपनिषत्संबन्धि वाणी ज्ञानको आच्छादित करके याने ज्ञानको अपनी भीतर रख करके सदा वर्तमान है, उसी उपनिषद्वाणीमें जीवात्मा और परमात्मा गुप्तरूपसे रहे हुवे हैं, की जिस वाणीसे देवतालोक अपने अपने भागको ग्रहण करते है. ॥ ३ ॥

९८. ८ ६ १६ एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥४॥

सुपर्णः पक्षवान् निराधारसंचारी एकः प्राणवायुः परमात्मा वा समुद्रं समुद्रवन्ति आपोस्मादिति समुद्रमन्तरिक्षं, यद्वा समुद्रवं सर्वनोगमनं तच्छील प्रपंचजातमाविष्टवान् "सृष्ट्वा तदेवानुप्राविशदि" ति श्रुते -(तैत्तिरीय २-२-६) वायु पक्षे वाय्वादिरूपेणाविवेश सइदं विश्वं सर्वं लोकं विचष्टे विशेषेण ख्यापयति, सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोकं विख्यातं कुर्वन्ति, तदेव उपास तोहं पाकेन परिपक्वज्ञानेन मनसा अन्तित अन्तिके समीपे स्वहृदये अपश्यं, तं प्राणं माता वाक् रेहि वाक् प्राणेन्तर्भवतीत्यर्थ ।स्वापे हि वाग्व्यापारो न दृश्यते प्रणव्यापारस्तु दृश्यतइति ॥ ४ ॥

अनुवाद—पक्षवान् निराधार-अन्तरिक्षादिक स्थलमें गमन करनेवाला असहाय प्राणवायु अथवा परमेश्वर अन्तरिक्ष अथवा प्रपंचमें प्रविष्ट हुवा "तत्सृष्ट्वा तदेवानुप्राविशत्" उस प्रपंचको उत्पन्न करके उसीमें (परमात्मा) अनु-

प्रविष्ट हुवा, वीयुपक्षमें वाय्वादिस्वरूपसे आविष्ट हुवा, वही परमात्मा इस समग्र विश्वको अग्निरूपसे विस्तृत करता है, और यह बात उपपन्नभी है कि परमात्मा किंवा प्राणात्मक वायुकी सहायताहीसे लोक जीवनको धारण कर सके हैं. उस देवको मैं उपासक परिपक्वज्ञानवाले मनसे अपने हृदयमें साक्षात्कार करता हुं. उसी (परमात्मा किंवा प्राण) में वागिन्द्रिय अन्तर्भूत होतीहैं, निद्रित होने पर वाग्व्यापार बंध होता है, तथापि प्राणव्यापार तो यथापूर्व अवस्थितही रहता है. ॥ ४ ॥

९९. ८ ६ १६ सुपर्णंविप्राःकवयोवचोभिरेकंसन्तंबहुधाकल्पयन्ति ।
छन्दांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥५॥१६॥

विप्रा मेधाविनः कवयः क्रान्तप्रज्ञाः मनुष्याः सुपर्णं सुपतनमेकं सन्तं परमात्मानं वचोभिः स्तुतिलक्षणैर्वचनैः बहुधा बहुप्रकारं कल्पयन्ति कुर्वन्ति । किंच त एव कवयः अध्वरेषु यज्ञेषु छन्दांसि गायत्र्यादीनि सप्त छंदांसि दधतः स्तोत्रशस्त्रादिना धारयन्तः द्वादशसंख्याकान् सोमस्य ग्रहान् ग्रहणसाधनानि पात्राणि उपांश्वन्तर्यामादीनि मिमते. ग्रहान् गृह्यन्ते एभिरिति ग्रहाः ॥५॥१६॥

अनुवाद—बुद्धिवान् और सर्वातिक्रान्त पदार्थको जाननेवाले पण्डित-लोक, सर्वत्र व्यापक इस परमात्माको स्तोत्रात्मक वचनोंसे वह पारमार्थिक स्व-रूप एक होनेपरभी अनेक प्रकारसे कहे हैं. और वही पण्डितलोक यज्ञादिकर्म, स्तोत्रशस्त्रादिकसे गायत्र्यादिक सप्त छन्दोंको धारण करके सोमके धारक अन्त-र्यामादिक द्वादशपात्रोंका निर्माण करते हैं.॥५॥

१००. ८ ६ १७ सहस्रधापञ्चदशान्युक्थायावद्द्यावापृथिवीतावदित्तत् ।
सहस्रधामहिमानःसहस्रंयावद्ब्रह्मविष्ठितंतावतीवाक् ॥८॥

सहस्रधा सहस्रसंख्याकेषु ब्रह्मादिस्तंबपर्यन्तेषु देहेषु पंचदशानि चक्षुः श्रोत्रं मनो वाक् प्राण इत्येतानि पंच, तदाधारत्वेन मातापित्रोः सकाशात् आगतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश, एवं पंचदशसंख्याकानि उक्थं उक्थानि उत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु जातेषु द्यावापृथिव्योः याव-त्परिमाणमस्ति तावदित् तत्परिमाणमेव आत्माधिष्ठितं प्राणिदेहजातं भवति ।

किंच सहस्रधा सहस्रसंख्याकेषु सहस्रं महिमानः सहस्रसंख्याका महान्तो व्यवहार-विशेषा भवन्ति, प्रतिविषयं प्रतिलक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः, सहस्र-धेत्यत्र ब्रह्म जगत्कारणं वस्तु यावत् नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठितं विशेषेण स्थितं, वाक् तावती तत्परिमाणा भवति, एकैकस्याभिधेयार्थ-स्यैकैकनामापेक्षणात् । अन्यत्रापिश्रूयते- "सर्वाणि रूपाणि विचित्य धीरो नाम नि कृत्वाभिवदन्यदास्त " इति (तैत्तिरीय आरण्यके ३-१२-७) ॥८॥

अनुवाद—ब्रह्मासें लेकरके स्तम्बपर्यन्त अनेक देहमें कार्यात्मक अपंचीकृत चक्षुः श्रोत्र मन वाणी और प्राण यह पांच, और कारणात्मक अपंचीकृत पंच महाभूत, और पंच पंचीकृत महाभूत की जो अपने मातापिताके पाससें शरीरमें अनुगत हैं, एवं सब मिलके पंचदश उत्कृष्ट अंग उत्पन्न होनेवाले प्राणिदेहनमें होतेहैं । आकाश और पृथ्वीका जितना परिमाण है उतनाही परिमाणवाले आत्माधिष्ठित प्राणिके शरीर होतेहैं. और अनेक (स्व) संख्यावाले उन् देहोंमें बडे बडे बहुत व्यवहार हो रहेहैं. प्रत्येक विषयोंमें और प्रत्येक लक्षणोंमें दर्शनश्रवणादिक व्यवहार प्रत्यक्ष अनुभूयमान है. जगत्का कारणभूत परमात्मा विविध प्राणिन्के देहस्वरूपसें तावत्परिमा-णक मायाद्वारा बनके अवस्थित हैं, उतने परिमाणसें वाणीभी विस्तृत है, क्योंकी सचराचर प्रपंचमें जितनें अभिधेय अर्थ हैं उनका बोध करनेके लिये नाम-वांमूपशब्दकी आवश्यकता है, श्रुतिमेंभी कहा है की " सर्वज्ञ सर्वशक्तिमान् परमेश्वर नामरूपात्मक इस् प्रपंचको उत्पन्न करके और जीव स्वरूपसें उसीमें प्रविष्ट हो करके अभिवदन-वचनादिव्यापारवान् होता है " ॥८॥

१०१. ८ ६ १७ कश्छन्दसांयोगमावेदधीरःकोधिष्ण्यांप्रतिवाचंपपाद ।
कमृत्विजामष्टमंशूरमाहुर्हरीइन्द्रस्यनिचिकायकःस्वित् ॥९॥

धीरो धीमान् को मानुषः छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना योगमावेद आजानाति । कोवा धिष्ण्यां धिष्ण्यानि होत्रादीनां सप्त स्थानानि वदहा वाचं प्रतिपपाद प्रतिपादयति करोति । किंच ऋत्विजां होत्रादीनां सप्तानां अष्टमं अष्टसंख्यापूरकं शूरं स्वतंत्रं कमाहुः वदन्ति । कः स्वित् कः खलु इन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ " ऋक्सामे वा इन्द्रस्य हरी " इत्याम्नायते, तादृशौ हरी

निचिकाय नितरां पूजयति जानाति। वेदिता प्रतिपादयिता अष्टसंख्यापरिपूरकस्य देवस्य ज्ञातावा परमात्मनोऽन्योनास्तीत्यर्थः ॥ ९ ॥

अनुवाद—कौन बुद्धिमान् पुरुष गायत्र्यादिकछन्दके योगको स्तुतशस्त्र-स्वरूपसे जानता है? कौन पुरुष होता अध्वर्यु इत्यादिकके सप्तस्थानोंको और तदुचित वाणीको प्रतिपादन कर सक्ता है? और होता इत्यादिक सप्त ऋत्विजोंमें अष्टम पुरुष स्वतन्त्र कौन है? इन्द्रके ऋक्सामरूप दोनों अश्व कौनहैं? और वैसे अश्वकी पूजा (कौन) करताहै?। गायत्र्यादिक छन्दोंके योगको जानने वाला सप्तस्थान और तदुचित वाणीको करनेवाला अष्टमत्व संख्यावाले स्वतंत्र देवको यथार्थ जाननेवाला परमात्मासे अतिरिक्त कोइ हैही नहिं. ॥ ९ ॥

१०२. ८ ७ १ ॐम् तदिदास भुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः॥

सद्यो जज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः ॥१॥

तत् जगत्कारणत्वेन सर्ववेदान्तप्रसिद्धं भुवनेषु (भूसत्तायां) सत्सु पृथिव्यादिषु लोकेषु मध्ये जगत्कारणं ब्रह्मैव ज्येष्ठं प्रशस्ततममास बभूव। तस्य परमार्थत्वात् तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च। यद्वा ज्येष्ठं वृद्धतमं जगत्कारण-त्वेन सर्वेषामादिभूतं बभूव। यद्वा वृद्धं तदेव ब्रह्म स्वप्रकाशतया आस. यतउपादान-भूतात् यस्माद्ब्रह्मणः उग्रःउद्गूर्णः त्वेषनृम्णः प्रदीप्तबलः सूर्यात्मक इन्द्रः जज्ञे जातो बभूव। श्रूयते हि—"चक्षोः सूर्यो अजायतेति" (ऋ. सं. ८-४-१९) "सूर्या चन्द्रमसौधाता यथा पूर्वमकल्पयदि" तिच (ऋ. सं. ८-८-४८)। सच जज्ञानो जायमान एव सद्यः शीघ्रं शत्रून् राक्षसान् निरिणाति निहिनस्ति. यद्वा उपासकानां पापरूपान् शत्रून् निहन्ति, तथाचब्राह्मणं-"सद्योहेष जातः पाप्मानमपाहतेति" विश्वे सर्वे ऊमाः अवन्ति रक्षन्तीत्यूमाः प्राणिनः सर्वप्राणिनो यं सूर्यात्मकमुद्यन्तमिन्द्रमनु-लक्ष्य मदर्थमुदगात् मदर्थमुदगादिति मदन्ति हृष्यन्ति, तथाच ब्राह्मणं—"भूतानि वैविश्वऊमास्तएनमनुमदन्ति उदगादुदगादिती"ति, तैत्तिरीयकंच-तस्मात्सर्वएवमन्य-न्तेमांप्रत्युदगादिति। यद्वा यं स्तुत्यादिभिर्मोदयन्तमनु पश्चात्सर्वे प्राणिनोऽभीष्टप्राप्त्या हृष्यन्ति ॥ इन्द्रो जज्ञ इत्यन्वयः ॥ १ ॥

अनुवाद—पृथिव्यादिक लोकोंकी मध्यमे जगत्के कारणरूपसे वेदान्त-शास्त्रमें प्रसिद्ध परब्रह्मही प्रशंसनीय हैं, क्योंकी वह ब्रह्म पारमार्थिक है और

उससे व्यतिरिक्त पृथिव्यादि लोक और तदन्तर्गत विषयवृन्द सब व्यावहारिक हैं, अथवा वह ब्रह्म ज्येष्ठ अत्यन्त वृद्ध यानें समस्त प्रपञ्चका कारण होनेंसें सबोंका आदिभूत है. किंवा वृद्ध ऐसा वह परब्रह्म स्वयंप्रकाशरूपसें है, यानें नित्य अखंडित स्वप्रकाश चैतन्यरूपसें देदीप्यमान है, और उपादान कारणभूत जिस परब्रह्मसें उग्र स्वभाव (प्रताप) वाले प्रदीप्तबलवाले सूर्यात्मक देव आविर्भावको पायें हैं, श्रुतिमें भी कहाहैकी "उस परमेश्वरके चक्षुरिन्द्रियसें सूर्यदेव प्रादुर्भावको पायें हैं" "परमेश्वरनें पूर्वकल्पानुसार सूर्य चन्द्रको प्रकट कियें है"। और वही सूर्यदेव आविर्भावको पातेहुवे त्वरित शत्रुओंका यानें मन्देहादिक राक्षसोंका नाश करतें हैं. अथवा उपासकोंके पापरूप शत्रुओंको नष्ट करतें है, वेदवाक्यभी हैकी—"यह सूर्यदेव प्रादुर्भावको पाते हुवे त्वरित पापोंको नष्ट करते भये"। सकलप्राणी उदयाभिमुख इस सूर्यात्मक देवको लक्ष्य करके आनन्दित होतें है, ब्राह्मणभागमें कहाहैकी "भूतभौतिकसृष्टिके अन्तर्गत सकल प्राणी उदयाभिमुख होते वे इस सूर्यदेवको लक्ष्य करके हर्षित होतेंहै" तैत्तिरीयक आरण्यक श्रुतिमेंभी कहा हैकी "सब लोक ऐसाही मानतें हैं की यह सूर्य देव मेरे (मुझके) लिये उदित हुवेंहै"। अथवा स्तुतिनमनादिकमें जिस सूर्य देवके संतुष्ट होनेके बाद स्तुत्यादि करनेवाले प्राणि इष्ट पदार्थकी प्राप्तिद्वारा मुदित होतें है, वैसे सूर्य देव प्रादुर्भावको प्राप्त हुवे ॥ १ ॥

१०२. ८ ७ १ त्वेक्रतुमपिवृञ्जन्तिविश्वेद्विर्यदेतेत्रिर्भवन्त्यूमाः ।

स्वादोःस्वादीयःस्वादुनासृजासमदःसुमधुमधुनाभियोधीः॥२॥

हे इन्द्र ते त्वयि विश्वे सर्वे यजमाना. क्रतुमनुष्ठेयं कर्म वृजन्ति समापयन्ति। अपिशब्दो ब्राह्मणोक्तसर्वभूताना सर्वमनसा समुच्चयार्थः, सर्वाणि पृथिव्यादीनि भूतानि सर्वेषा प्राणिना मनासि सर्वे यज्ञक्रतवश्च व्याप्ते त्वय्येव यजमानैः परिसमाप्यन्त इत्यर्थ। तथाचब्राह्मण-'त्वयीमानि सर्वाणि भूतानि सर्वाणि मनासि सर्वे क्रतवोपि वृजन्तीत्येवतदाह"ति। यद्यस्मात् एते ऊमाः तर्पकाः ईदृशा यजमानाः पूर्वमेकाकिन. सन्तः पश्चाद्द्वि द्विवारं स्त्रीरूपेण पुरूपेणच जाताः सन्तः पुनरपत्येन सार्धं त्रिः त्रिवार जन्मभाजो भवन्ति, एक एवात्मा स्त्रीपुंरूपेण जायते, "अर्धो वा एष आत्मनो यत्पत्नी"तिश्रुतेः, पुत्रोप्यात्मैव "आत्मावै पुत्रनामासी"तिश्रुतेः, अतएव-

मेवेभिवृद्धा भवन्ति ततोवगम्यते त्वय्येवानुष्ठितं सर्वं कर्म परिसमापयन्ति इति।
तथाचब्राह्मणं "द्वौवैसन्तौमिथुनौ प्रजायेते प्राजापत्या" इति। हे इन्द्र त्वंच स्वादोः
प्रियाद्गृहधनादेरपि स्वादीयः स्वादुतरं प्रियतरमपत्यं स्वादुना स्वादुभूतेन
मिथुनेन मातापित्रात्मकेन संसृज संयोजय। यद्वा स्वादुना भावेन उत्पन्नं तदपत्यमपि
संयोजय। एतदेवाह-अदः तदपत्यं मधु मधुरं मधुना मदहेतुना मिथुनान्तरेण
पौत्रेण सु सुष्ठु अभियोधीः अभियोधयाभितः क्रीडय ॥ २ ॥

अनुवाद—हे इन्द्रदेव! समग्रयजमानलोक की जो हमेशां यज्ञयागादि कर्ममें परायण होकरके आपहीके भीतर सकल कर्मोंको समाप्त करतेहैं. मन्त्रोक्त " अपि " शब्दसें ब्राह्मणभागमें कहे हुवे सकल भूतोंके मन, गृहीत होते हैं, याने पृथिव्यादिक समस्त भूत सकल प्राणिके मन और सकल यज्ञादिक क्रत्वात्मककर्म यजमानलोक ( इन्द्रके लक्ष्यार्थ भूत ) व्यापकस्वरूपवाले आपहीमें समाप्त करतेहैं, अर्थात् फलदानका स्वातन्त्र्य आपहीको होनेसें उन् कर्मोंको आपको समर्पित करतेहैं। ब्राह्मणभागमें कहा हुवा है की-" ( हे परमात्मन्! ) सकलभूत समस्तमन और समस्त ऋतु सब आपहीकी भीतर ( रह करके अपने अपने व्यापारमें ) तत्पर होरेहैं—व्याप्रुत हैं " । और ( यज्ञादिकसें देवोंको ) तृप्त करनेवाले यजमानलोक पूर्वमें अकेले होनेपरभी पश्चात् स्त्रीरूपसें और पुरुषरूपसें आविर्भूत होतेहैं, और फिरसेंभी संतानके साथ तीसरी दफे जन्मवाले होतेहैं, याने एकही आत्मा है तथापि स्त्रीरूप और पुरुषरूपसें और फिरसें अपत्य ( संतान ) रूपसें प्रतीत होताहै, श्रुतिभी कहतीहै " यह जो धर्मपत्नी है सो आत्माका अर्धभाग ( रूपसें काहेता ) है " "पुत्र-यह आत्माही है" इत्यादिक श्रुत्यनुसार आत्माही सकल स्वरूपमें अभेदद्वारा प्रतीत हो रहाहै, जबकी इसी प्रकारसें सकलप्रपंच आत्मासें अव्यतिरिक्त है तब क्रियमाण ( कर्म ) कर्ता करण इत्यादिक सब आप ( परमेश्वर ) हीकी भीतर पर्यवसित होता है। हे परमात्मन्! गृहधनादिक की जो प्रिय है उसमेंभी प्रियतर अपत्य ( संतान ) को प्रेमपात्र जननीजनकरूप मिथुन-युग्मसें आप संयुक्त करें। अथवा स्वादिष्टभावसें उत्पत्तिको पाये हुवे उस संतानकोभी आप संयुक्त करें। यही बात कहतेहैं की प्रीतिपात्र इस अपत्यको मदहेतुरू

प्रेमयुक्त पौत्रसें (संयोगद्वारा) अच्छी तरहसें क्रीडा करवाओ यानें पुत्रपौत्रादिक संततिकी (आप) वृद्धि करें ॥ ३ ॥

१०४. ८ ७ ३ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ।
सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ १ ॥

हिरण्यगर्भः हिरण्मयस्यांडस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथाचतैत्तिरीयकं "प्रजापतिर्वैहिरण्यगर्भः प्रजापतेरनुरूपत्वाये"ति। यद्वा हिरण्मयः अंडो गर्भवद्यस्य उदरेवर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इतिउच्यते, अग्रे प्रपंचोत्पत्तेः प्राक् समवर्तत मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत, यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मणः उत्पत्तेः तदुपहितोप्युत्पन्न इत्युच्यते, सच जातो जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्मांडादेः सर्वस्य जगतः पतिरीश्वर आसीत्, न केवलं पतिरासदिव अपि तर्हि स हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवं, उतापिच इमां अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिं, यद्वा पृथिवीत्यन्तरिक्षनाम अन्तरिक्षं दिवं भूमिंच दाधार धारयति। कस्मै अत्र किंशद्वः अनिर्ज्ञातस्वरूपत्वात्प्रजापतौ वर्तते, यद्वा सृष्ट्यर्थं कामयते इति कः, यद्वा कं सुखं तद्रूपत्वात्क इत्युच्यते, अथवा इन्द्रेण पृष्टः प्रजापतिः मदीयं महत्त्वं तुभ्यं प्रदाय अहं कः कीदृशः स्यामित्युक्तवान्, स इन्द्रः प्रत्यूचे यदिदं ब्रवीषि अहं कः स्यामिति तदेव त्वं भवेति, अतः कारणात् क इति प्रजापतिराख्यायते। कं प्रजापतिं देवाय देवं दानादिगुणयुक्तं हविषा प्राजापत्यस्य पशोर्वपारूपेण एककपालात्मकेन पुरोडाशेन वा विधेम वयमृत्विजः परिचरेम ॥ १ ॥

अनुवाद-हिरण्मय ब्रह्माण्डके गर्भभूत हिरण्यगर्भ-प्रजापति, श्रुतिभी "हिरण्यगर्भका अर्थ प्रजापति" ऐसा कहती है. अथवा हिरण्मय अंड जिसके उदरमें गर्भवत् वर्तमान है सो सूत्रात्मा हिरण्यगर्भ कहा जाताहै, वह हिरण्यगर्भ प्रपञ्चोत्पत्तिके पूर्वकालमें माया के अध्यक्ष होनेंसें जगत्की उत्पत्तिमें परायण परमात्मासें प्रकट हुवे, यद्यपि हिरण्यगर्भभी परमेश्वरस्वरूप होनेंसें प्राकट्यवान् नहिं हो सक्ता तथापि उस हिरण्यगर्भका उपाधिभूत वियदादिक स्थूल सूक्ष्म सब प्रपंच परमब्रह्मसें उत्पन्न हुवाहै इसलिये तदुपहित हिरण्यगर्भभी "प्रकट" शब्दसें

व्यपदिश्यमान होतेहैं. और वह हिरण्यगर्भ प्रकट होकरके त्वरितही स्वयं अद्वितीय समग्र विकृत वर्ग ( प्रपंच) का ईश्वर--नियन्ता हुवा, केवल प्रपंचका नियन्ताही हुवा इतनाहिं नहिं किंतु वह हिरण्यगर्भ पृथ्वी विस्तृतद्युलोकको अथवा भूर्लोक भुवर्लोक और स्वर्लोकको धारण करता भया. सृष्टिको विस्तृत करनेकी कामनावाले अथवा अखंड सुखरूप अथवा प्रजापतिस्वरूप दानादिगुणसंपन्न उस हिरण्यगर्भ देवको एककपालात्मक पुरोडाशरूप हविष्यसें हम (ऋत्विज्) लोक विधिपूर्वक परिचर्या करते हैं. ॥ १ ॥

१०५. ८ ७ ३ यआत्मदाबलदायस्यविश्वउपासतेप्रशिषंयस्यदेवाः ॥

यस्यछायामृतंयस्यमृत्युःकस्मैदेवायहविषाविधेम ॥ २॥

यः प्रजापतिः आत्मदा आत्मनां दाता, आत्मानो हि सर्वे तस्मात्परमात्मन उत्पद्यन्ते, यथाग्नेः सकाशात् विस्फुलिंगा जायन्ते तद्वत्, यद्वा आत्मनां शोधयिता, बलदाः बलस्य च दाता शोधयिता वा यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे प्राणिन उपासते प्रार्थयन्ते सेवन्ते वा, तथा देवाअपि यस्य प्रशासनमुपासते, अपिच अमृतं अमृतत्वं, भावप्रधानो निर्देशः। यद्वा अमृतं मरणं नास्ति अस्मिन्निति अमृतं सुधा, तदपि यस्य प्रजापतेः छाया छायेव भवति, मृत्युर्यमश्च प्राणापहारी छायेव भवति, तस्मै कस्मै देवायेत्यादिसमानं, पूर्वेण हविषा पुरोडाशात्मनेति तु विशेषः ॥ २ ॥

अनुवाद--जो प्रजापति आत्माको प्रकट करनेवाले हैं, जैसें अग्निसें *अग्निकण प्रकट होतेहैं* तैसेंही प्रजापतिसें चिदाभासात्मक जीवात्मा प्रकट होताहै. अथवा आत्मा-अन्तःकरणको जो प्रजापति शुद्ध करनेवालेहै, और बलको देनेवाले अथवा शुद्ध करनेवाले हैं, और सकलप्राणी जिनकी प्रकृष्ट आज्ञाकी प्रार्थना करते हैं, अथवा आज्ञाको उठातेहैं, और देवतालोकभी जिनकी आज्ञाको उठातेहैं, और अमृत ( मरण जन्म रहित पदार्थ ) जिनकी छायारूपहै, और मृत्युभी जिनकी छायारूपहै वैसे पूर्वमन्त्रोक्त प्रजापति देवको एककपालात्मक पुरोडाशरूप हविष्यसें हम ( ऋत्विज् ) लोक परिचर्या करतेहैं. ॥ २ ॥

१०६. ८ ७ ३ यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव ।

यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥३ ॥

यो हिरण्यगर्भः प्राणतः प्रश्वसतः निमिषतः अक्षिपक्ष्मचलनं कुर्वतः जगतः जंगमस्य प्राणिजातस्य महित्वा महित्वेन माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति, अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः, चतुष्पदो गवाश्वादेश्च यः प्रजापतिरीशे ईष्टे, ईदृशो यः प्रजापतिः तस्मै कस्मा इत्यादि सुबोधं, हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः ॥ ३ ॥

अनुवाद–जो हिरण्यगर्भ, श्वासप्रश्वासवाले और निमेषोन्मेषवाले सचराचर प्रपचान्तर्गत समग्र प्राणिवर्गका (अपनी) महत्वासे अद्वितीय होकरकेभी नियन्ता है, और दृश्यमान द्विपद–मनुष्यादिक चतुष्पात्–गोमहिषाश्वादिकका भीजो प्रजापति (हिरण्यगर्भ) नियन्ता है, उनको हृदयादिस्वरूप हविष्यसे हम (ऋत्विज) लोक परिचर्या करतेहै. ॥ ३ ॥

१०७. ८ ७ ३ यस्येमेहिमवन्तोमहित्वायस्यसमुद्रंरसयासहाहुः।
यस्येमाःप्रदिशोयस्यबाहूकस्मैदेवायहविषाविधेम ॥ ४ ॥

हिमा अस्मिन्सन्तीति हिमवान्, तेन बहुवचनान्तेन सर्वे पर्वता लक्ष्यंते, यथा छत्रिणो गच्छन्तीति, हिमवन्तो हिमवदुपलक्षिताः इमे दृश्यमानाः सर्वे पर्वताः यस्य प्रजापतेः महित्वा महत्त्व माहात्म्यमैश्वर्यमित्याहुः, तेन सृष्टत्वाचद्रूपेणावस्थानाद्वा, तथा रसया रसो जलं तद्वती रसा नदी रसाभि नदीभिः सह समुद्रं, पूर्ववदेकवचनं, सर्वान्समुद्रान् यस्य महाभाग्यमित्याहु कथयन्ति सृष्टचभिज्ञाः, यस्य च इमाः प्रदिशः प्राच्यारंभा आग्नेय्याद्या. कोणदिशः ईशान्यन्ताः तथा बाहू, वचनव्यत्ययः, बाहवः भुजाः भुजवत्प्राधान्ययुक्ताः, प्रदिशश्च यस्य स्वभूताः तस्मै कस्मा इत्यादि समानं पूर्वेण ॥ ४ ॥

अनुवाद–हिमालयादिक समग्र पर्वत, इस प्रजापतिनें अपनी शक्तिसे निर्मित कियेहैं. अथवा यह प्रजापति स्वयं तत्तदाकार प्रतीत होतेहै, इसलिये (उन प्रजापतिका यह हिमालयादिक पर्वत) ऐश्वर्यरूप है. यद्यपि इस मन्त्रमें "हिमवान्" शब्दका प्रयोग करनेसे केवल हिमालय पर्वतही गृहीतहोना चाहिये तथापि "छत्रिणो गच्छन्ति" "छत्रधारी लोक जारहे हैं." इस वाक्यसे छत्रसहित और छत्ररहित सबलोकोंका ग्रहण जैसे होताहै वैसेही "हिमवान्"

शब्दके प्रयोगसें हिमालयादिकं समस्त पर्वत गृहीत होतें हैं, तो यह हिमालया-दिक सब पर्वत उन प्रजापतिका ऐश्वर्यरूप है क्योंकी उनोने यह सब (पर्वत) रचे हुवे हैं, अथवा उनी (पर्वतों) के स्वरूपसें यह प्रजापति अवस्थित है, यानें तत्तदाकार रूपसें प्रतीयमान होरहें है. और उसीतरहसें समग्र नदीयोंके साथ सब समुद्रभी जिन (प्रजापति) का महत् ऐश्वर्यरूप हैं, ऐसा सृष्टिके रहस्यको जाननेवाले कविलोक कहतें हैं. और यह पूर्वदक्षिणादिक दिशायें और अग्नि-कोणसें लेकरके ईशान कोण पर्यन्त सब कोणादिशायें यह सब जिन (प्रजापति) के बाहुस्थानापन्न हैं, यानें बाहु जैसें प्रधानअवयव है तैसेंही दिशा और प्रदिशा यह जिनके बाहुरूप मुख्य अवयवस्थानापन्न हैं, उन प्रजापति देवकी हम (ऋत्विज) लोक हविष्यादिकसें परिचर्या करतें हैं. ॥४॥

१०८. ८ ७ ३. येनद्यौरुग्रापृथिवीचदृळ्हायेनस्वःस्तभितंयेननाकः ।
योअन्तरिक्षेरजसोविमानःकस्मैदेवायहविषाविधेम ॥५॥३॥

येन प्रजापतिना द्यौः अन्तरिक्षं उग्रा उद्गूर्णविशेषा गहनरूपा वा पृथिवी भूमिश्च दृढा येन स्थिरीकृताः, स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतं यथाधो न पतति तथा उपर्यवस्थापितमित्यर्थः, तथा नाक आदित्यश्च येनान्तरिक्षे स्तभितः यश्चान्तरिक्षे रजस उदकस्य विमानो निर्माता तस्मै कस्मा इत्यादिगतं ॥ ५ ॥ ३ ॥

अनुवाद-जिस प्रजापतिनें अन्तरिक्ष और उत्पद्यमान पदार्थविशेष किंवा गहनस्वरूपवाली पृथिवी स्थिर की है, और स्वर्गभी जिनोंने नीचें न गिरजाय तैसें उपरितनभागमें स्थिरतासें स्थापित किया है, और सूर्यकोभी जिन्नें अन्तरिक्षमें स्थापित किया है, और जो प्रजापति (हिरण्यगर्भ) अन्तरिक्षमें (सें) जलका (वृष्टिद्वारा) निर्माण करनेवालें है, उन प्रजापति देवको हम (ऋत्विज) लोक पुरोडाशादिक हविष्योंसें परिचर्या समर्पण करतेंहैं ॥५॥३॥

१०९. ८ ७ ४. यंक्रन्दसीअवसातस्तभानेअभ्यैक्षेतांमनसारेजमाने ।
यत्राधिसूरउदितोविभातिकस्मैदेवायहविषाविधेम ॥६॥

क्रन्दितवान् रोदितवाननयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ, श्रूयते हि ''यदरोदीत्तदनयोरोदस्त्वमि''ति। ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं

तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्याऽध्यैक्षतामावयो-र्महत्त्वमनेनेत्यभ्यपश्येतां, कीदृश्यौ द्यावापृथिव्यौ रेजमाने राजमाने दीप्यमाने यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयंप्राप्तः सन् विभाति प्रकाशते तस्मै कस्मा इत्यादि सुज्ञानं ॥६॥

अनुवाद–देदीप्यमान और लोकरक्षाके लिये प्रजापतिनें जिन् द्युलोक भूलोकको निर्मित किये है और जो द्युलोक और भूलोक स्थिरताको पा करके " हमारा महत्त्व इन् (प्रजापति) केहीं अधीन है " ऐसा अपनी बुद्धिमें पर्यालोचन किया करते है. और जिन् आधारभूत प्रजापतिमें सूर्यनारायण उदयको प्राप्त होकरके प्रकाशमान होते है, उन् प्रजापति (हिरण्यगर्भ) देवको हम लोक हविष्यादिकसें परिचर्या समर्पण करतें है. ॥६॥

११०. ८ ७ ४. आपोहयन्दृहतीर्विश्वमायन्गर्भंदधानाजनयन्तीरग्निम् ।
ततोदेवानांसमवर्ततासुरेकःकस्मैदेवायहविषाविधेम॥७॥

बृहती. बृहत्यो महत्यः आग्निं, उपलक्षणमेतत्, अग्न्युपलक्षितं सर्वं वियदादि-भूतजातं जनयन्ती जनयन्त्यः तदर्थं गर्भं हिरण्मयाऽस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपो ह आप एव विश्वमायन् सर्वं जगद्व्याप्नुवन् यद्यस्मात् ततस्तद्धे तोर्देवाना देवादीना सर्वेषा प्राणिना असुः प्राणभूत एकः प्रजापतिः समवर्तत समजायत। यद्वा यत् य गर्भं दधाना आपो विश्वात्मनावस्थिताः ततो गर्भभूता-त्प्रजापतेः देवादीना प्राणात्मको वायुः अजायत, अथवा उक्तलक्षणा या आपः विश्वमावृत्य स्थिताः ताः ततः ताभ्योद्भ्यःसकाशात् एकोऽद्वितीयः असु. प्राणात्मकः प्रजापतिः समवर्तत निश्चकाम, तस्मै कस्मा इत्यादि गतं ॥ ७ ॥

अनुवाद–तेज, आकाश इत्यादिक सकलभूतोंको उत्पन्न करनेवाला और उसी उत्पत्तिके लिये हिरण्मय अंडका गर्भभूत प्रजापतिको धारण करनेवाला बृहद् स्वरूपवाला जल सकल जगतको व्याप्त करता भया, जिसके करते देवादिक समग्र प्राणिमात्रका प्राणभूत एक प्रजापति प्रकट हुवे. अथवा जिस गर्भको धारण करनेवाला जल जगत्स्वरूपसें अवस्थित हुवा उस गर्भभूत प्रजापतिसें देवादिकोंका प्राणवायु प्रकट हुवा. अथवा सकल विश्वको व्याप्त करके जो जल अवस्थित है उसी जलसें एक अद्वितीय प्राणात्मक प्रजापतिदेव प्रकट हुवे, उन् प्रजापति देवको हम लोक हविष्यादिकसें परिचर्या समर्पण करतें है. ॥७॥

१११. ८ ७ ४ यश्चिदापोमहिनापर्यपश्यद्दक्षंदधानाजनयन्तीर्यज्ञम्।
योदेवेष्वधिदेवएकआसीत्कस्मैदेवायहविषाविधेम ॥८॥

यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीरुत्पादयन्तीः, तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिं आत्मनि दधाना धारयित्रीः ईदृशीरापः व्यत्ययेन प्रथमा अपः प्रलयकालीनाः महिना महिम्ना स्वमाहात्म्येन यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् यश्च देवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति, तस्मै कस्मा इत्यादि गतं ॥ ८ ॥

अनुवाद–यज्ञोपलक्षित विकृतवर्गको उत्पन्न करनेवाले और उसी लिये प्रपंचस्वरूपसें वृद्धिको प्राप्त होनेवाले प्रजापति देवको अपनी भीतर (गर्भरूपसें) धारण करनेवाला प्रलयकालिक जलको जो प्रजापतिदेव अपने माहात्म्यसें परिदर्शन करनें लगे, और जो देवोंके मध्यमें देवहै, यानें देवोंकेभी नियन्ताहैं, और स्वयं अद्वितीय-असहाय है, उन प्रजापति देवको हम लोक हविष्यादिकसें परिचर्या समर्पण करतेंहैं. ॥ ८ ॥

११२. ८ ७ ४ मानोहिंसीज्जनितायःपृथिव्यायोवादिवंसत्यधर्माजजान।
यश्चापश्चन्द्राबृहतीर्जजानकस्मैदेवायहविषाविधेम ॥ ९ ॥

॥ प्रजापतिः नोस्मान् मा हिंसीत् मा बाधतां, यः पृथिव्या भूमेः जनिता जनयिता स्रष्टा, यो वा यश्च सत्यधर्मा सत्यमवितथं धर्म जगतो धारणं यस्य स तादृशः प्रजापतिः दिवं अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास, यश्च बृहतीः महतीः चन्द्राः आह्लादिनीः अप उदकानि जजान जनयामास, तस्मै कस्मा इत्यादि गतं ॥ ९ ॥

अनुवाद–जो प्रजापतिदेव भूमिका उत्पादकहै. और जो देव यथार्थ रीतिसें जगत्को धारण करनेवाला है, और जिन प्रजापति देवनें अन्तरिक्षोपलक्षित सकल लोकोंको उत्पन्न कियेहै, आनन्ददायक यानें निर्वाहोपयुक्त जलकोंभी जिन्हे पैदा किया है वह प्रजापतिदेव हम लोकोंको बाधित न करें, उन् प्रजापतिदेवको हम लोक हविष्यादिकसें परिचर्या समर्पण करतें हैं. ॥ ९ ॥

११३. ८ ७ ४ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ।
यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् ॥१०॥४॥

हे प्रजापते त्वत् त्वत्तोन्यः कश्चित् एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि जातानि प्रथमविकारभांजि ता तानि सर्वाणि भूतजातानि न परिबभूव न परिगृह्णाति न व्याप्नोति त्वमेव एतानि परिगृह्य स्रष्टुं शक्नोषीतिभावः। परिपूर्वोभवतिः परिग्रहार्थः. वयंच यत्कामाः यत्फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत्फलं नोस्माकं अस्तु भवतु, तथा वयंच रयीणां धनानां पतय ईश्वराः स्याम भवेम ॥ १० ॥ ४ ॥

अनुवाद–हे प्रजापते ? आपके सिवाय दूसरा कोइभी इस कालमें वर्तमान प्रथम विकारवाले सकल भूतोंको व्याप्त करसक्ता नहिं, यानें आपही समग्र भूतोंको व्याप्त करके उत्पन्न करसक्ते हो । और हम लोक जिस फलको चाहते हुवे आपको हविष्य समर्पण करतें है वह फल हम लोकोंको प्राप्त हो, और हम लोक धनके मालिक होंय ऐसी आपकी दया हो. ॥ १० ॥

११४. ८ ७ ११ अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः।
अहंमित्रावरुणोभाबिभर्म्यहमिन्द्राग्नीअहमश्विनोभा ॥१॥

अहं सूक्तस्य द्रष्ट्री वाक् आंभृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैः एकादशभिः तदात्मना चरामि, एवं वसुभिरित्यादौ तत्तदात्मना चरामीतियोज्यम् । उभौभावहमेव ब्रह्मीभूता बिभर्मि धारयामि इन्द्राग्नी अप्यहमेव धारयामि, उभौभावश्विनाश्विनावप्यहमेव धारयामि, मयि हि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं सद् दृश्यते, मायाच जगदाकारेण विवर्तते तादृश्या मायया आधारत्वेन असंगस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः ॥ १ ॥

अनुवाद–"अम्भृण" नामक महर्षिकी "वाक्" नामक पुत्री ब्रह्मज्ञानको पाइहुइ आत्माकी स्तुती करती है–मैं सूक्तद्र वाग्देवी जगत्का कारणभूत ब्रह्मस्वरूप होती हुइ एकादशरुद्रस्वरूपसें (जगतमें) विहार करती हुं. और मैंही वाग्देवी ब्रह्मस्वरूप होनेसे मित्र और वरुण देवको धारण करती हुं. और इन्द्र अग्नि और अश्विनीकुमारकोभी मैंही धारण करता हुं, शुक्तिकामें

रजतकी तरह मेरी भीतर सकल विश्व अध्यस्त होनेपरभी भ्रान्तिसे सत्यवत् प्रतीत होता है. माया जगत्स्वरूपसे परिणत होती है, उसी मायाका अधिष्ठानभूत असंग जो परब्रह्म है, उसीका वह प्रपंच विवर्त कहा जाता है. ॥ १ ॥

११५. ८ ७ ११ अहंसोममाहनसंबिभर्म्यहंत्वष्टारमुतपूषणंभगंम् ।
अहंदंधामिद्रविणंहविष्मतेसुप्राव्ये३यजमानायसुन्वते ॥२॥

आहनसं आहन्तव्यं अभिषोतव्यं सोमं, यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमं अहमेव बिभर्मि, तथा त्वष्टारमुतापिच पूषणं भगंच अहमेव बिभर्मि, तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविः देवानां प्रापयित्रे तर्पयित्रे सुन्वते सोमाभिषवं कुर्वते ईदृशाय यजमानाय द्रविणं धनं यागफलरूपं अहमेव धारयामि, एतच्च ब्रह्मणः फलदातृत्वं " फलमतउपपत्ते " रित्यधिकरणे भगवता भाष्यकारेण समर्थितम् (ब्र. सू. ३-२-८) ॥ २ ॥

अनुवाद-अभिषव करनें योग्य सोमको अथवा शत्रुओंको निर्मूल करनेवाले देवतात्मक सोमको में (वाग्देवी) ही धारण करतीहुं. और त्वष्टा पूषा और भग एतन्नामक देवको भी, ब्रह्मस्वरूप मेंही (वाग्देवी) धारण करतीहुं. और उत्तम हविष्य देवोंको समर्पण करके तृप्त करनेवाले सोमाभिषव करनेवाले हविष्युक्त यजमानके लिये यागका फलभूत धनको भी मेंही धारण करतीहुं. भगवान् भाष्यकारनेंभी "फलमत उपपत्तेः" इस ब्रह्मसूत्रके अधिकरणमें ब्रह्मके तत्तत्फलदातृत्वका समर्थन किया है. ॥२॥

११६. ८ ७ ११ अहंराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानाम् ।
तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर्यावेशयन्तीम् ॥३॥

अहं राष्ट्री, ईश्वरनाम एतत्, सर्वस्य जगत ईश्वरी तथा वसूनां धनानां संगमनी संगमयित्री उपासकानां प्रापयित्री चिकितुषी यत्साक्षात्कर्तव्यं परंब्रह्म तज्ज्ञानवती स्वात्मतया साक्षात्कृतवती, अतएव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या चैवंगुणविशिष्टाहं तां मां भूरिस्थात्रां बहुभावेन प्रपंचात्मनावतिष्ठमानां भूरीणि बहूनि भूतजातानि आवेशयन्तीं जीवभावेन आत्मानं प्रवेशयन्तीमीदृशीं मां

पुरत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति, उक्तप्रकारेण विश्वरूपेणाव-स्थानात् यद्यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥३॥

अनुवाद–सकल जगत्को नियमन करनेवाली और उपासकोंको धनादिक द्रव्य पहुंचानेवाली साक्षात्करनेयोग्य परब्रह्मके अपरोक्ष ज्ञानवाली और यज्ञिय देवोंमें प्रधानभूत प्रपंचस्वरूपसे अवस्थित और अनेक भूतभौतिकविकृत वर्गमें जीवस्वरूपसे अनुप्रविष्ट होनेवाली ऐसी मुझको देवतालोक यागादिक कर्मरूपसे विधान करतें है, यानें जो जो कर्म करतें है वे सब कर्ता करण क्रिया और फलरूप मेंहीहुं. (ऐसा वाग्देवीका सार्वात्म्यभाव प्रतीत होताहै) ॥३॥

११७. ८ ७ ११ मयासोअन्नमत्तियोविपश्यतियःप्राणितियईशृणोत्युक्तम् ।

अमन्तवोमान्तउपक्षियन्तिश्रुधिश्रुतःश्रद्धिवंतेवदामि ॥४॥

यः अन्नमत्ति स भोक्तृशक्तिरूपया मयैवान्नमत्ति, यश्च विपश्यति आलोकयतीत्यर्थः, यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति सोपि मयैव, यश्चोक्तं शृणोति, य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवः अमन्यमानाः अजानन्तः उपक्षियन्ति उपक्षीणाः संसारेण हीना भवन्ति। माममन्तवः मद्विषयज्ञानरहिता इत्यर्थः, हे श्रुत विश्रुत सखे श्रुधि मया वक्ष्यमाणं शृणु, किं तत् श्रोतव्यं? श्रद्धिवं श्रद्धिः श्रद्धा तयायुक्तं श्रद्धायत्नेन लभ्यमित्यर्थः, मत्वर्थीयो वः, ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि ॥ ४ ॥

अनुवाद–जो प्राणी अन्नका भक्षण करता है सो भोक्तृशक्तिरूप मेरी सहायताहीसे भक्षण करता है, और जो प्राणी दर्शन करता है (देखता है) और श्वासोच्छ्वासादिक व्यापारको करता है, और जो प्राणी कहे हुवे ( वचनों ) को सुनता है सो सब मेरी ( वाग्देवीकी ) सहायताहीसें है, इस प्रकार सर्वके अन्तर्यामिस्वरूपसे अवस्थित ऐसी मुझको यथार्थ रीतिसे जो लोक नहि जानतें वे उपक्षीण होतेंहै, यानें सांसारिक विषयोपभोगोंसेभी रहित होतें हैं, हे विश्रुत ? श्रद्धासहित यत्नसें उपलब्ध करने योग्य ब्रह्मतत्त्व मैं तुमको सुनाती हुं, सो तुम सुनो ॥ ४ ॥

११८. ८.७ ११ अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः।
यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधाम् ॥५॥११॥

अहं स्वयमेव इदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि, देवेभिर्देवैः इन्द्रादिभिरपि जुष्टं सेवितं, उतापिच मानुषेभिः मनुष्यैरपि जुष्टम्, ईदृग्वस्त्वात्मिका अहं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं तं पुरुषमुग्रं कृणोमि सर्वेभ्योधिकं करोमि, तमेव ब्रह्माणं स्रष्टारं करोमि, तमेव ऋषिं मतीन्द्रियार्थदर्शिनं करोमि, तमेव सुमेधां शोभनप्रज्ञं च करोमि ॥५॥११॥

अनुवाद–मैं स्वयंही इस ब्रह्मतत्त्वका उपदेश करतीहुं की जिस तत्त्वको इन्द्रादिक देव और इतरमनुष्यलोकभी पर्यालोचनात्मक सेवन करते है, इसी परब्रह्मतत्त्वस्वरूप में (वाग्देवी) जिस पुरुषको रक्षित करनेको चाहती हुं उस पुरुषको उग्र-सबसें अधिक बनाती हुं, और उसी पुरुषको सृष्टिका रचनेवाला ब्रह्माभी बनादेतीहुं, और उसी पुरुषको अतीन्द्रियविषयदर्शी ऋषि बनादेतीहुं, और उसी पुरुषको उत्तम प्रज्ञावान् भी बना देतीहुं. ॥५॥

११९. ८ ७ १२ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहन्तवाउ।
अहंजनायसमदंकृणोम्यहंद्यावापृथिवीआविवेश ॥६॥

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य महादेवस्य धनुश्चापं अहमातनोमि ज्ययाततं करोमि, किमर्थं ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै हन्तुं हिंसितु महमेव समदं समानं माद्यन्त्यस्मिन्निति समत् संग्रामः स्तोतृजनार्थं शत्रुभिः सह संग्रामं अहमेव कृणोमि करोमि, तथा द्यावापृथिवी दिवंच पृथिवींच अन्तर्यामितया अहमेवाविवेश प्रविष्टवती ॥६॥

अनुवाद–पूर्वकालमें त्रिपुरासुरके विजयसमयमें ब्राह्मणोंके शत्रुभूत त्रिपुरनिवासी असुरको हनन करनेके लिये महादेवजीके धनुषको (पिनाकको) ज्या(मौर्वी)से विस्तृत-सज्ज मेंही करतीहुं,यानें तत्तद्देवोंकेभी देहमें अग्निमात्मस्वरूपसें निविष्ट होकरके देवादिकन्से क्रियमाण कार्यको में (वाग्देवी) ही करतीहुं. और मेंही भक्तजनोंके हितार्थ शत्रुओंके साथ संग्राम करतीहुं, और द्युलोक और भूलोकमें अन्तर्यामिस्वरूपसें मेंही अनुप्रविष्ट हुं. ॥६॥

१२०. ८ ७ १२ अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वन्तःसमुद्रे।
ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि ॥७॥

"द्यौः पिते"तिश्रुते पिता द्यौः पितरं दिवमहं सुवे प्रसुवे जनयामि "आत्मन आकाश· सभूत"इतिश्रुते (तै. २–६) कुत्रेति तदाह-अस्य परमात्मन. मूर्धन् मूर्धनि उपरि कारणभूते तस्मिन्हि वियदादिकार्यजात सर्वं वर्तते तन्तुषु पटइव मम च योनि कारण, समुद्रे समुद्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा तस्मिन्, आसु व्यापनशीलासु धीवृत्तिषु अन्तर्मध्य यद्ब्रह्मचैतन्य तन्ममकारणमित्यर्थ, यत ईदृग्भूताहमस्मि ततोहेतोर्विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनुप्रविश्य वितिष्ठे विविधंव्याप्य तिष्ठामि, उतापिच अमूं द्यां विप्रकृष्टदेशेऽवस्थित स्वर्गलोक मुपलक्षणमेतत्, एतदुपलक्षित कृत्स्न विकारजात वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उपस्पृशामि, यद्वा अस्य भूलोकस्य मूर्धन् मूर्धन्युपरि अह पितरमाकाशं सुवे, समुद्रे जलधौ अप्सु उदकेषु अन्तर्मध्ये मम योनि· कारणभूतो भृणाख्य ऋषिर्वर्तते, यद्वा समुद्रेऽन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूत ब्रह्मचैतन्य वर्तते ततोह कारणात्मिका सर्वा सर्वाणि भुवनानि व्याप्नोमि। अन्यत्समानम् ॥ ७ ॥

*अनुवाद*–आकाशकोभी मैं (वाग्देवी) उत्पन्न करतीहुं "एतस्मादात्मन आकाश. सभूत." "इस आत्मासें आकाश उत्पन्न हुवा" इत्यादिक श्रुतिमें भी कहा है, और वह आकाशप्रभृतिक सकल भूतात्मककार्य तन्तुन्में पटकीतरह जिस परब्रह्मके कार्य हैं वहीब्रह्म मेराभी (देहेन्द्रियादिसघातका) कारण है, और मायावच्छिन्न चेतन की जो ईश्वरशद्बित हे, और गुणोंसे सकल प्रपचका निर्माता है, उसकाभी वह नियामक होनेसें कारण है, सर्वत्र व्याप्त होनेवाली बुद्धिवृत्तिओंकाभी वह नियामक है, वही ब्रह्म मुझसें अभिन्न है, यानें " तत्वमसि " " अयमात्माब्रह्म " इत्यादिक श्रुत्यनुसार में तत्स्वरूप हीहु, और में पूर्वोक्त ब्रह्मस्वरूपसें अव्यतिरिक्त हु, इसलिये समग्रभूतभौतिक पदार्थोंमें तन्नियामकस्वरूपसें अनुप्रविष्ट होकरके विविध स्वरूपसें व्याप्त हुं, और उस द्युलोकोपलक्षित समग्र विकृतवर्गको मायात्मक होनेसें कारणभूत इस मेरे देहसें में व्याप्त करतीहु. अथवा इस भूलोकके उपरिभागमें आकाशको

में ही उत्पन्न करतीहुं, समुद्रान्तर्गत जलकी मध्यमें मेरा कारणभूत "अंभृण" नामक ऋषि है, किंवा समुद्रमें अन्तरिक्षमें और देवोंके देहोंमें मेराभी कारणभूत ब्रह्मचैतन्य अनुस्यूतरूपसें वर्तमान है, इसलिये कारणस्वरूप ऐसी मैं सकलभुवनों को व्याप्त करतीहुं. (दूसरा सब पूर्वोक्तअनुवादानुसारहीहै) ॥७॥

१२१. ८ ७ १२ अहमेववातइवप्रवाम्यारभमाणाभुवनानिविश्वा ।
परोदिवापरएनापृथिव्यैतावतीमहिनासंबभूव ॥८॥१२॥

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती, अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि प्रवर्ते, वातइव यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्, उक्तं सर्व निगमयति, परोदिवा परइति परस्तादित्यर्थे वर्तते यथा अधइति अधस्तादर्थे तद्योगेच तृतीया सर्वत्र दृश्यते, दिव आकाशस्य परस्तात् एना पृथिव्या इदम् एनादेशः, अस्याः पृथिव्याः परः परस्तात् द्यावापृथिव्योरुपादानमुपलक्षणम्, एतदुपलक्षितात्सर्वस्माद्वि-कारजातात्परस्ताद्वर्तमाना असंगोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती संबभूव, एतच्छब्देन उक्तं सर्वं परामृश्यते, एतत्परिमाणमस्याः, सर्व-जगदात्मना अहं संभूतास्मि ॥ ८ ॥ १२ ॥

अनुवाद-जैसें वायु किसीसें प्रयुज्यमान न होकरके स्वयं स्वकीय इच्छासें ही गतिमान् होताहै तैसेंही मैं (वाग्देवी) भी किसीसें प्रयुज्यमान न हो करके स्वसत्तासें ही कारणस्वरूपमें सकल भूत भौतिक पदार्थोंका प्रारंभ (उत्पत्ति) करतीहुं द्युलोक भूलोकादिकसें उपलक्षित सकल विकारवृन्दसें पर और सबके अभिन्ननिमित्तोपादानरूप असंग उदासीन नित्य कूटस्थ ब्रह्म चैतन्यरूप ऐसी मैं अपने माहात्म्यसें तत्तद्रूप हुईहुं, यानें सकल प्रपंचस्वरूपसें मैंही बनी हुं ॥८॥

१२२. ८ ७ १७ नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत्
किमावरीवःकुहकस्यशर्मन्नम्भःकिमासीद्गहनंगभीरम्॥१

"तपसस्तन्महिना जायतैकमि"त्यादिना अग्रे सृष्टिः प्रतिपादयिष्यते, अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते, तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत्रासत्, शशविषाणवन्निरुपाख्यं

नासीत्; नहि तादृशात् कारणादस्य सतो जगतउत्पत्तिः संभवति। तथा नोसत् नैव सत् आत्मवत् सत्त्वेन निर्वाच्यमासीत्, यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति, तथापि भावाभावयोः सहावस्थानमपि न संभवति, कुतस्तयोस्तादात्म्यमित्युभयविलक्षणानिर्वाच्यमेवासीदित्यर्थः। ननु नोसदिति पारमार्थिकसत्वस्य निषेधः तर्ह्यात्मनोप्यनिर्वाच्यत्वप्रसंगः, अथोच्यते, न, आनीदवातमिति तस्य सत्त्वमग्रेवक्ष्यते, परिशेषान्मायाया एवात्र सत्त्वं निषिध्यते इति, एवमपि तदानीमिति विशेषणानर्थक्यं, व्यवहारदशायामपि तस्याः पारमार्थिकसत्वाभावात्। अथ व्यावहारिकसत्वस्य तदापि व्यावहारिकसत्ता पृथिव्यादीनां भावानां तदापि विद्यमानत्वात् कथं नोसदिति निषेधः। तत्राह नासीद्रजइत्यादि—लोकारजांस्युच्यन्त इति यास्कः। अत्रच सामान्यापेक्षया एकवचनं व्योम्नो वक्ष्यमाणत्वात्, तस्यावस्तनाः पातालादयः पृथिव्यंता नासन् इत्यर्थः, तथा व्योमान्तरिक्षं तदपि नो नैवासीत्, परः व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीत् इत्यर्थः, अनेन चतुर्दशभुवनगर्भं ब्रह्मांडरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति—किमावरीवरिति। किमावरणीयं तत्वं आवरकभूतजातं आवरीवः अत्यन्तमावृणुयात् आवार्याभावाचदावरकमपि नासीदित्यर्थः। यद्वा किमिति प्रथमैव, किं तत्त्वमावरकमावृणुयात् आवार्याभावात् आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत् तत्तत्वं कुह कुत्रदेशे अवस्थायावृणोति आधारभूतस्तादृशो देशोपि नासीदित्यर्थः। कस्य शर्मन् कस्यवा भोक्तुः जीवस्य शर्मणि सुखे सुखदुःखसाक्षात्कारलक्षणेवा निमित्तभूतेसति तदावरकं तत्त्वमावृणुयात्, जीवानामुपभोगार्था हि सृष्टिः, तस्यां हि सत्यां ब्रह्मांडस्य भूतैरावरणं, प्रलयदशायां च भोक्तारोजीवाः उपाधिविलयात् प्रविलीना इति कस्य कश्चिदपि भोक्ता न संभवति, इत्यावरणस्य निमित्तस्याभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपंचोपि तदानीं नासीदित्युक्तं भवति। यद्यपि सावरणस्य ब्रह्मांडस्य निषेधेन तदन्तर्गत मप्सत्वमपि निराकृतं, तथापि " आपोवाइदमग्रे सलिल मासीत् " इत्यादिश्रुत्या कश्चिदपां सद्भावमाशंकेत, तं प्रत्याचष्टे, अंभः किमासीदिति। गहनं दुःप्रवेशं गभीरं दुरवस्थानं अत्यगाधम् ईदृशमंभः किमासीत्तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववान्तरप्रलयविषया॥ १॥

अनुवाद-" तपसस्तन्महिना जायत " इत्यादिक मन्त्रसे अग्रिमभागमें
सृष्टिका प्रतिपादन करेंगे, एतदादिक मन्त्रोंसे समस्तप्रपंचरहित सृष्टिके पाका-
लिक अवस्था जिसको " प्रलयावस्था " कहते हैं उसका निरूपण करते हैं-उस्
प्रलयकालमें अवस्थित इस् जगत्का मूलकारण सो शशशृङ्गकी तरह निरुपाख्य-
अत्यन्ताभावका प्रतियोगि नहि था, क्योंकी अभावात्मककारणसे भावात्मक
जगत्की उत्पत्ति नहि होसक्ती, और ( इस प्रपंचका मूलकारण ) आत्माकीतरह
सद्रूपभी नहिथा, यद्यपि सदसत्स्वरूप प्रत्येक विलक्षण है तथापि भाव और
अभावकी स्थिति एकत्र संभवित नहि है. तो भावाभावका तादात्म्यतो कैसेहो
सके ? इसलिये भावाभावसे विलक्षण कोइ अनिर्वाच्यही था ऐसा कहना चाहिये.
ननु "नोसदासीत्" इस् वाक्यसे पारमार्थिक सत्त्वका प्रतिषेध करनेसे आत्म-
तत्त्वकी पारमार्थिक सत्ताकाभी निषेध होना चाहिये ? और वैसा स्वीकार करनेसे
आत्मतत्त्वभी तत्त्वातत्त्वरूपसे अनिर्वचनीय है ऐसा कहना चाहिये. अगर
"नआसीदवातम्" इस् मन्त्रसे आगे आत्माकी पारमार्थिक सत्ताका निरूपण
किया जायगा तो आत्मतत्त्व सत्स्वरूपही है, अनिर्वाच्य नहि है, किंतु परिशेषा-
नुमानसे मायाके सत्त्वका निषेध किया जाता है ऐसा कहाजायतो
"तदानीं" "उस् कालमें" यह विशेषण व्यर्थ होजायगा, क्योंकी व्यवहारकालमें
मायाका पारमार्थिक सत्त्व कहां है की जिस् व्यवहारकालके व्युदासार्थ "तदा-
नीम्" इस् विशेषणका चारितार्थ्य मिले, इसलिये मायाके सत्त्वकाभी "नोसदासीत्"
इस् वाक्यसे निषेध किया जाता नहि। अगर ऐसा कहाजायकी-व्यावहारिक
पदार्थोंकी (तदानीम्) उस् कालमें व्यावहारिक सत्ता है तो पृथिव्यादिक
पदार्थोंका उस कालमें सत्त्व होनेसे " नोसदासीत् " यह निषेध कैसे संगत हो
सक्ता है ? इसलिये कहते है "नासीद्रजः" रजःशब्दवाच्य पातालादिक पृथिवी-
पर्यन्त लोक और अन्तरिक्ष और उसके उपरितनलोक द्युलोकसे लेकरके ब्रह्मलोक-
पर्यन्तके चतुर्दशभुवनात्मक सबलोक थेही नहि. अब उनके आवरकरूपसे पुरा-
णादिकमें प्रसिद्ध वियदादिकभूत उनकी स्थितिका प्रदेश और आवरणके निमि-
त्तकाभी प्रतिषेध करते हैं-आवरण करनेयोग्य वैसा तत्त्व कौन् था ? की जिस्को
आवरकपदार्थ अपनी आवरणशक्तिसे आवृत करे, जबकी कोइ आवरणीय-
आवरणकरनेयोग्य पदार्थ नहिथा तो उसको 'आवरणकरनेवाला पदार्थ कैसे
संभवित होसक्ता ? अथवा आवरकतत्त्व कौन् था ? की जो आधार्यको आवृत करे.

यानें आवार्य और आवरक दोनों स्वरूपसें थेही नहि. और आवरकतत्त्व किम् देशमें अवस्थित होकरके आवृत करे? क्योंकी उस्का आधारभूत देशही नहिथा. और भोगोपभोगमें तत्पर किस् जीवात्माके सुखार्थ अथवा सुखदुःखके साक्षात्कारार्थ किसी निमित्तको लेकरके वह आवरकतत्त्व आवार्यको आवृत करे? क्योंकी जीवोंके उपभोगार्थ सृष्टि है, उस् सृष्टिकी विद्यमानदशामें ब्रह्माण्डका भूतकर्तृक आवरण होसक्ता है, परंतु प्रलय कालमें उपाधिका लय होनेसें तदुपहित चेतनात्मक भोक्ता जीवात्माभी स्वरूपसें लीनही होजाता है इस्सें कोइभी किसीका भोक्ता बनही सक्ता नहि, इस्लिये आवरणको भोक्तृतामें निमित्तत्व न होनेंसे आवरण संगत होसक्ता नहि. यानें भोग्य और भोक्ता एतदुभयात्मक प्रपंच उस् कालमें थाही नहि. यद्यपि आवरण सहित ब्रह्माण्डका निषेध करनेंसे तदन्तर्गत जलकाभी निषेधही सिद्ध होताहै तथापि "आपोवाइदमग्रे सलिलमासीत्" "पूर्वकालमें जलहीथा" इस् श्रुतिके अनुसार कोइ जलके सद्भावकी शंका करसक्ता है इस्लिये उस् जलका भी प्रतिषेध श्रुति करती है–गंभीर अत्यन्त अगाध ऐसा जलभी क्या उस् कालमें था? अर्थात् वहभी नहिथा. तब "आपोवा" इस् श्रुतिकी क्या गति होगी? तो इसका जवाब यही हैकी वह श्रुति तो अवान्तरप्रलयविषयक है. और यहतो महाप्रलयका निरूपण हो रहा है. इस्लिये उस् श्रुतिको अवान्तरविषयकत्व होनेंसें निरवद्य है. ॥ १ ॥

१२३. ८ ७ १७ नमृत्युरासीदमृतंनतर्हिनरात्र्याअह्नआसीत्प्रकेतः॥

आनीदवातंस्वधयातदेकंतस्माद्धान्यन्नपरःकिंचनास॥२

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् सएव संहर्ता मृत्युर्विद्यत इत्यत आह–नं मृत्युरासीदिति। ननु यदि स नासीत् तर्हि तदभावकृतममृतममरणं प्राणिनामवस्थानं तदानीमपिस्यात् तत्राह–अमृतं न तर्हीति। तर्हि तस्मिन् प्रतिहारसमये। अयंभावः–सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत तदा भोगाभावात् निष्प्रयोजनमिदं जगत् इति परमेश्वरस्य मनसि संजिहीर्षा जायते, तयैव स मृत्युः सर्वं जगत्संहरत इति। किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादित्ये तदेवाभिप्रेत्य कठैराम्नायते–"यस्य ब्रह्मचक्षत्रंचोभेभवत ओदनं, मृत्युर्यस्योपसेचनं कइत्था वेद यत्र स" इति(क.१-२-२५)नन्वेतस्य सर्वस्या-

धिकरणभूतः कालो विद्यत इत्यत आह—नरात्र्या इति, रात्र्या अह्नश्च प्रकेतः प्रज्ञानं चासीत, तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात्, एतेनाहोरात्रनिषेधेन तदात्मको मासर्तु-संवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नोसदासीत्तदानीमिति कालवाची प्रत्ययः? उपचारादिति ब्रूमः, यथेदानीन्तन निषेधस्य कालोवच्छेदकः तथा मायापि तदवच्छेदहेतुरिति अवच्छेदकत्वसाम्येन अकालेपि कालवाची प्रत्ययः। तत्स-यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति। तत्स-फलवेदान्तप्रसिद्धं ब्रह्मतत्त्वमानीत् प्राणितवत्, नन्वेवं प्राणनकर्तुः जीवभावापन्न-स्यैव ब्रह्मणः सत्त्वं स्यान्न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः—"अप्राणोह्यमनाः शुद्ध" इति (मुण्डक २-२) तस्य प्राणसंबन्धाभावात्, तत्राह—अवातमिति, अयमाशयः—आनीदित्यत्र धात्वर्थः क्रिया तत्कर्ता तस्यच भूतकालसंबन्धइति त्रयोर्थाः प्रतीयन्ते, तत्र समुदायो न विधीयते यथाग्नयेष्टाकपाल इति। येन ब्रह्मणः सत्त्वं न स्यात्। किंतर्हि अनेन कर्तृत्वमनूद्य भूतकालसत्ताक्षणो गुणो विधीयते, दध्ना जुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानं तत्राप्यनेन कर्तृत्व-विशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुपपत्तिप्रसंगात् अतोनेनकर्तृत्वेनेदानीं-तनेनोपलक्षितं यन्निरुपाधिकं परंब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चि-द्दोष इति। नन्वीदृशस्य ब्रह्मणः मायया सह संबन्धासंभवात् सांख्याभिमता स्वतंत्रा सद्रूपा सत्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति किं नोसदिति निषेधः? तत्राह-स्वधयेति। स्वस्मिन् धीयते ध्रियते आश्रित्य वर्तते इति स्वधा माया, तया तद्ब्रह्म एकमविभागापन्नमासीत्, अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते, यद्यप्यसंगस्य ब्रह्मणः तया सह संबन्धो न संभवति तथापि तस्मिन्नविषया तत्स्वरू-पामिव संबन्धोप्यध्यस्यते यथाशुक्तिकायां रजतस्य, एतेन सद्रूपत्वमपि तस्याः प्रत्या-ख्यातं। ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वा-द्ब्रह्मणोपि तत्प्रसंग इति कथं तस्य सत्त्वमुक्तमानीदवातमिति, ब्रह्मणो वा सत्त्वा त्तस्या अपि सत्त्वप्रसंग इति कथं नो सदासीति सत्त्वप्रतिषेधः? नैवं, अनुभवदृष्ट्या ऐक्यावभासेपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वंच प्रतिपादितं ननु दृग्दृश्यौ इति द्वावेव पदार्थौ, आनीदवातंस्वधयेति, तौचेदंगीक्रियेते तर्हिमपरम वशिष्यते यन्नासीदज इत्यादिना प्रतिषिध्येत, तत्राह-तस्मादिति तस्माद्ध तस्मात्खलु पूर्वोक्तान्मायासहिताद्ब्रह्मणः अन्यत्किंचन किमपि वस्तु भूतभौतिकात्मकं जगन्नास न बभूव, ननु तदानीमन्यस्य सत्वनिषेधो न शंक्यः, असत्त्वे चाप्रसक्तत्वान्न निषेधोप-

योग इत्यत आह—परः इति, परः परस्तात्सृष्टेः ऊर्ध्वं वर्तमानं इदं जगत् तदानीं न बभूवेत्यर्थः अन्यथा उक्तरीत्या क्वचिदपि निषेधो न स्यादितिभावः ॥ २ ॥

अनुवाद—ननु पूर्वोक्त प्रलय किसी संहर्ताके अधीन होनेसें उस प्रलयका हेतुभूत संहारक मृत्यु उस् समय अवश्य होगा ? . इस् संशयके निवृत्त्यर्थ कहते हैंकी, " न मृत्युरासीत् " संहारक–मृत्युभी उस् कालमें नहिथा. तब मृत्युका अभावरूप अमृत था ? इस्का यह उत्तर हैकी " अमृतं न तर्हि " उस् प्रलय-कालमें अमृत अमरणस्वरूप प्राणिका अवस्थानभी नहिथा, याने इस्का यह अभि-प्राय है–परिपक्व होनेंसे भोगोपभोगमें हेतुभूत प्राणिमात्रका कर्म जब उपभुक्त हो चुका तब इतर कोइ भोग अवशिष्ट न होनेंसे यह विश्व निरर्थक है क्योंकी जग-दन्तःपाती प्राणिमात्रकी स्थिति अपनें अपनें कर्मफलोंके उपभोगार्थही है, जब परमेश्वरके मनमें प्राणिमात्रके अनवशिष्ट भोगोंका पर्यालोचन हुवा तब संहार करनेकी इच्छा की, जिस्को "संजिहीर्षा" कहते है, सो इच्छा हुइ, उसी इच्छाके अधीन संहारक मृत्युनें सकल विश्वका संहार कियाथा परंतु स्वतन्त्ररूपसें नहिं "मृत्युर्धावति पञ्चमः" जिस् परमेश्वरका वशवर्ती मृत्यु इधरउधर दौडा करता है इत्यादिक श्रुतिभी है. जबकी परमेश्वरकी संजिहीर्षाके अधीनही होकरके मृत्यु संहारक बनसक्ता है तब उस्का स्वतन्त्र संहारकत्व कैसे होसक्ता. और उस् मृत्युके अभावात्मक अमरणरूप अमृतभी कैसे उस् कालमें उपपन्न होसक्ता ? इसी अभिप्रायसें कठवल्लीमें कहाहै—"जिस् (परमेश्वर) का ब्राह्मण क्षत्रिय और तदुप-लक्षित सकल विश्व–ओदनोपलक्षित भक्त (भक्ष्य) बनता है. और मृत्यु जिस्का उपसेचन–व्यञ्जनस्थानापन्न है उस् परमात्मदेवको कौन जानसक्ता" ? इस् सकल प्रपञ्चका अधिकरण (आधार) भूत काल तो उस् समयमें जरूर होगा ? तो इस्का यह उत्तर है "न रात्र्याः" रात्रि और दिनका ज्ञानही नहिंथा, क्योंकी अहो-रात्रके हेतुभूत जो सूर्यचन्द्र है वे उस् कालमें नहिं थे. जबकी सूर्यचन्द्र भी नहिं थे तब उनके अधीन मास ऋतु संवत्सरादिक समग्रसमयभी नहिंथा, ऐसा कहनेंसें कालकाभी प्रत्याख्यान हुवा. अगर ऐसा कहाजायकी—जब समयकाभी निषेध किया जाता है तो " नोसदासीत्तदानीम् " इस् वाक्यमें " तदानीम् ", "उस् कालमें" ऐसा क्यों कहा ? यानें "तदानीं" यह पद् कालवाचिप्रत्ययान्त है तो उससें कालकी प्रतीति होती है ? तो इसका यह समाधान है की यह

कालवाचिप्रत्ययान्त पदका प्रयोग तो उपचारसें किया गया है. - जैसें वर्तमान-
कालिक निषेधका अवच्छेदक काल है तैसें प्रलय कालिक निषेधकी अवच्छेदिका
माया है, यह सिर्फ अवच्छेदक साम्य होनेसें अकाल अर्थमेंभी कालवाचीप्रत्यय
हुवा है, इसलिये पूर्वोक्त दूषण है नहि। पहिले ब्रह्मके पारमार्थिक सत्व कहनेको
स्वीकार कियाथा सो अब पारमार्थिक सत्व कहतें हैं—सकल वेदान्तशास्त्रमें
प्रसिद्ध यह ब्रह्मस्वरूप प्राणनक्रिया प्राणधारणानुकूलव्यापारविशिष्ट हुवा. ननु
यह परब्रह्म प्राणधारणानुकूलव्यापारविशिष्ट होनेसें जीवभावापन्न हुवा, एवंच
जीवात्मकब्रह्मकासत्व सिद्ध होता है, निरुपाधिकतया विवक्षित शुद्धब्रह्मका
सत्व पाया जाता नहि, और शुद्ध ब्रह्ममें तो ''अप्राणो ह्यमनाः शुभ्रः'' यह पार-
मार्थिकस्वरूप प्राण मन इत्यादिकसें रहित है, और स्वयं शुद्ध निष्कलंक है
इत्यादिक श्रुतिसें प्राणसंबन्धका अभाव बताया जाता है, इसका उत्तर कहतें हैं
''अवातम्'' यह भाव हैकी ''आनीत् (प्राणधारणानुकूलव्यापारविशिष्ट हुवा)
इस् क्रियापदसें धात्वर्थात्मक कर्ता क्रिया और भूतकालका संबन्ध ऐसे तीन अर्थ
प्रतीत होतें हैं, एतत्त्रितयात्मक समुदायका विधान ''आनीत्'' इस् पदसें किया
जाता नहि, जैसें अग्न्युद्देश्यक अष्टाकपाल पुरोडाश, इसमें केवल पुरोडाशहीका
विधान है नहिंकी अष्टत्वविशिष्ट कपालका, तैसेही''आनीत्'' इस् पदसें ब्रह्माधिष्ठानक
कर्तृत्व अनूदित करके भूतकालिक सत्तात्मक गुणका विधानरूपसें व्यपदेश किया
जाता है, यह व्यपदेश ब्रह्मविषयक सत्वका बाधक नहि है किन्तु साधक है. जैसें
''दध्नाजुहोति'' ''दहीसें होम करता है'' यह वाक्य ''अग्निहोत्रं जुहुयात्स्वर्ग-
कामः'' स्वर्गकी इच्छावाला अग्न्याधानपूर्वक होम करें इस् वाक्यका अनुवादक
हो करके दधिरूप गुणका विधान करता है तैसेंही यहांपरभी प्राणनक्रियाके
कर्तृत्वानुवादपूर्वक भूतकालिक सत्वात्मक गुणमात्रका विधान किया जाता है,
यानें ''नोसदासीत्'' इत्यादिक निषेधान्यथानुपपत्त्यर्थ कर्तृत्वविशिष्ट परब्रह्मका
पूर्वकालिक सत्व विहित नहि किया जाता किंतु प्राणनक्रियानिरूपित कर्तृत्व-
द्वारा वर्तमान कालिक जो निरुपाधिक ब्रह्मचैतन्य है उसीमें भूतकालिक सत्त्वके
विधानका व्यपदेश करतें हैं, इसलिये कोइ दोष नहि हैं. ननु इस् निरुपाधिक
ब्रह्मका मायाके साथ संपर्क न होनेसें सांख्यशास्त्राभिमत स्वतंत्र सद्रूप सत्व रज
और तमोगुणात्मक प्रकृतिही अभिमत हो, ''नोसदासीत्'' इस् निषेधसें क्या
मतलब ? इसका उत्तर कहतें हैं ''स्वधयेति'' स्व—परब्रह्मरूप अधिष्ठानमें धा-

अध्यासात्मक सम्बन्धद्वारा आश्रयको प्राप्त करनेवाला मायात्मक पदार्थको स्वधा कहतें है, उसी मायाके साथ वहब्रह्म अविभागापन्न (अविभक्त) था. यहां "स्वधया" इस् सहार्थक तृतीयाविभक्त्यन्त पदका प्रयोग होनेसें उस् "स्वधा" वाच्य मायाका स्वातन्त्र्य निवारित होता है, क्योंकी सहशब्दके अर्थकी जहां योग्यता रहेती है वहां सहशब्दका प्रयोग न होनेपरभी "सहयुक्तेऽप्रधाने" इस् पाणिनीय (व्याकरण) शास्त्रानुसार तृतीया विभक्ति होती है, और वह तृतीयाविभक्ति स्वनिष्ठविधेयतानिरूपितोद्देश्यताक्रान्तप्रकृतिमें अप्रधानतारूप अर्थकी निरूपिका (निरूपण करनेवाली) होती है, यानें वह माया कार्यद्वारा अनुभवका विषयभूत होनेपरभी अधिष्ठान सत्तासें अनतिरिक्त सत्ताक होनेसे स्वयं अप्रधान-गौणही है ब्रह्मकी तरह वह (माया) स्वतन्त्र नहिं है, और इस् विषयमें यह उपपन्नभी है की ब्रह्मस्वरूप असंग होनेसे मायाका संबन्ध उसमें पारमार्थिक होसकाही नहिं किंतु आरोपितापरपर्याय काल्पनिक अध्यासात्मक संबन्ध है, जैसें रज्जुरूप अधिष्ठानमें अज्ञानद्वारा प्रतीयमान सर्प अध्यस्त है तैसेंही ब्रह्मरूप अधिष्ठानमें मूलाज्ञानद्वारा माया और तत्कार्य सचराचरविश्वकी प्रतीति होरही है, इस्सें वह प्रतीति आविद्यक होनेसें अयथार्थ है, यानें जैसें अविद्यासें प्रतीयमान सर्पके अप्राधान्य सहित अधिष्ठानभूत रज्जुकी प्रधानता है तैसेंही मूलाविद्यामें प्रतीयमान मायिकप्रपंचके अप्राधान्य सहित अधिष्ठानभूत परब्रह्महीकी प्रधानता है, माया तो वास्तविकरूपसें हैही नहिं, यह निष्कृष्ट तात्पर्य है. ननु माया जब ब्रह्मसें अविभागापन्न है तो सत्व असत्वरूपसें व्यपदेश करनेको अयोग्य होनेसे वहमाया अनिर्वाच्य है इसलिये ब्रह्ममेंभी अनिर्वाच्यता प्रसक्त होगी? जबकी ब्रह्मभी सत्त्वासत्त्वरूपसें अनिर्वाच्य है तब "आसीत्" इत्यादिक क्रियापदोंसे उसका सत्त्व कहना असंगत होगा. अथवा ब्रह्ममें पारमार्थिक सत्त्व होनेसें तत्संबद्ध मायामेंभी पारमार्थिक सत्त्व मानना चाहिये? जबकी माया पारमार्थिक सद्रूप है तब "नोसदासीत्" ऐसे सत्त्वका निषेध अनुपपन्न होगा? इसका यह उत्तर हैकी-अनुभव दृष्टिमें ऐक्य प्रतीत होनेपरभी युक्तिद्वारा विवेक करनेसें मायाअंश अनिर्वाच्य है, और ब्रह्म पारमार्थिक सद्रूप है ऐसा प्रतिपादन किया है. ननु द्रष्टा और दृश्य यह दोनो पदार्थ "आनीदवातंस्वधया" इत्यादिकसें जब पाये जाते है तब इन दोनोंमे बाकी क्या बचा की जिसका "नासीद्रजः" इत्यादिक मन्त्रोंसे निषेध किया जाता है? इस् शंकाका यह समाधान हैकी उस माया विशिष्ट ब्रह्मसें अन्य भूत

भौतिक कोइभी पदार्थ थाही नहिं. ननु उस कालमें अन्यके असत्त्वकी शंका नहिं होनी चाहिये, और असत् कहनेसें अनुपलभ्यमान होनेसें निषेध करनां असंगत होता है? इसका समाधान यह हैकी सृष्टिके पश्चात्कालमें वर्तमान यह प्रपंच उस पारमार्थिकदशामे नहिंथा, अगर ऐसा न कहें तो किसी जगापर निषेध प्रसक्तही नहिं होसक्ता यह भाव है. ॥ २ ॥

१२४. ८ ७ १७ तमआसीत्तमसागूढमग्रेप्रकेतंसलिलंसर्वमाइदम्।
तुच्छयेनाभ्वपिहितंयदासीत्तपसस्तन्महिनाजायतैकम् ॥३॥

ननूक्तप्रकारेण यदिपूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म, जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्यावश्यंभावात्, अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यतइत्युच्यते, कथं तस्य जन्म अत आह-तमसागूहळमग्रइति। अग्रे सृष्टेः प्राक् प्रलयदशायां . भूतभौतिकं सर्वं जगत् तमसा गूढं यथा नैशंतमः सर्वं पदार्थजातमावृणोति तद्वत् 'आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञान मत्र तमइत्युच्यते, तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति, आच्छादकात्तस्मात् तमसो नामरूपाभ्यां यदाविर्भवनं तदेवतस्यजन्मेत्युच्यते एतेन कारणावस्थायामसदेव कार्यमुत्पद्यत इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः। ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत्कथं नासीद्रज इत्यादिनिषेधः। तत्राह-तमासीदिति तमो भावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मनां, यतः सर्वं जगत् प्राक् तम आसीत् अतो निषिध्यत इत्यर्थः, नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वात् जगत्कर्म कथं तयोः कर्मकर्त्रो स्तादात्म्यं, तत्राह अप्रकेतमिति। अप्रकेतं अप्रज्ञायमानं, अयमर्थः यद्यपि जगतः तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनं। अतएव मनुना स्मर्यते— आसीदिदंतमो भूतमप्रज्ञातमलक्षणं। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वत इति। कुतो न प्रज्ञायते तत्राह—सलिलं सल्यतो इदं दृश्यमानं सर्वं जग सलिलं कारणेन संगतं अविभागापन्नं आः आसीत्, यद्वा सलिलमिति लुप्तोपमं सलिलमिव यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसा अविभागापन्नं जगत् न शक्यविज्ञान

मित्यर्थः। ननु विविधविचित्ररूपभूयसः प्रपंचस्य कथंमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः? तथा तमोपि क्षीरवद्बलवदित्येत्रोच्यते तर्हि दुर्बलस्य जगतः सर्गसमयेपि नोद्भवसंभव इत्यतआह–तुच्छयेनेति। आसमन्ताद्भवतीत्यातुच्छयेन तुच्छेन तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्, एकं एकीभूतं कारणेन तमसा अविभागतां प्राप्तमपि तत्कार्यजातं तपसः स्रष्टव्य पर्यालोचनरूपस्य महिना माहात्म्येनाजायत उत्पन्नं। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते, "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप" इति॥ ३॥

अनुवाद–ननु पूर्वोक्त प्रकारसें यह जगत् जब पूर्वकालमें नहि था तब उसका जन्म कैसे हुवा? "नासतो विद्यते भावः" असत्–अविद्यमान पदार्थका भाव-सत्त्व हो सक्ता नहि. और इसमे युक्तिभी हैकी–जायमान–उत्पद्यमान पदार्थ उत्पत्त्यनुकूल व्यापारार्थक "जन्" धातुमें कर्तृत्वद्वारा अन्वित होनेसे वह "कारक" कहाजाता है, कारण के अवान्तर भेदको "कारक" कहते हैं, तो जैसें छेदनभेदनादिक्रियाका कर्ता और कुठारवास्यादिककरण उस क्रियाके पूर्वकालमें वर्तमान हैं तैसेही इस "जन्" धातुका कर्ता प्रपंच (जगत्) है तो उसकी भी स्थिति जनिक्रिया (उत्पत्त्यनुकूल व्यापार) सें पूर्वमें होनी चाहिये. जबकी यह प्रपंच जनिक्रियासे पूर्वमें भी विद्यमान है तब उसका जन्म कैसे होसक्ता है? अगर इस दोषकी निवृत्तिके लिये "जनि क्रियासे पूर्वभी यह जगत विद्यमान है" ऐसा कहा जाय तोभी विद्यमानका जन्मही नहि होसक्ता", इसमें वही दोष स्थिर है. इसीके समाधानके लिये भगवान् वेदनारायण कहते हैं कि "तमसागूढमग्र" इति, सृष्टिके पूर्वकालमें भूतभौतिकसमम जगत् "तमः" पदवाच्य "माया" परनामक भावरूप अज्ञानसें आच्छादित–आवृत था. जैसे रात्रिसम्बन्धी अन्धकार पदार्थसमूहको आवृत–आच्छादित करता है तैसे मायाभी आत्मतत्त्वको आवृत करनेवाली होनेसें प्रपंचको भी आच्छादित करदेती है, और वही प्रपंच अपने आच्छादक मायात्मक आवरणसें नामरूप सहित प्रादुर्भावको पाताहै, वही उस प्रपंचका जन्म है ऐसा कहनेसें "कारणावस्थामें अविद्यमान पदार्थ कार्यरूपसें उत्पन्न होता है" ऐसा माननेवाले असत्कार्यवादि पण्डितलोकका कहना असंगत हुवा. ननु कारणरूप 'तमः' पदवाच्य मायामें जगत्स्वरूप कार्य सूक्ष्मरूपसें जब विद्यमानही था तब "नासीद्रजः" "रजः शब्दवाच्

लोकात्मक प्रपंच नहिथा " ऐसा निषेध पहिले क्यों कहा ? इसका उत्तर कहतें हैंकी-मूल कारण मायात्मक अज्ञान स्वरूपही यह प्रपंचथा, इस लिये उसका निषेध करतें है, यानें अज्ञानसें अतिरिक्त कार्यरूपसें इस प्रपंचकी प्रतीति नहि होती थी यह तात्पर्य है. ननु अज्ञान आवरण करनेवाला होनेंसे आवरणात्मक व्यापार (क्रिया) का कर्ता है, और जगत उस अज्ञानसें आवृत होता है इसलिये वह कर्म है, तो कर्ता (अज्ञान) और कर्म (प्रपंच) इनका तादात्म्य कैसे होसका ? इसका समाधान कहतें है की अप्रकेतमिति-अज्ञायमान है, यानें अज्ञान और जगतका कर्मकर्तृभाव यद्यपि युक्तिसिद्ध है तथापि व्यवहारकालमें जैसें नामरूपकी प्रतीति होती है तैसी प्रतीति उस ( प्रलय ) कालमें स्पष्ट नहि है तोभी, यही इन (कर्ता कर्म) दोनोंका तादात्म्य है. मनुस्मृतिमेंभी कहा हैकी यह परोक्षतिदृश्यसमूहात्मक प्रपंच पूर्वकालमें तर्क और निर्देशका अविषय और नामरूपात्मक लक्षण-चिह्नसें रहित और अप्रकाशस्वरूप होनेंसें मानों चारो तरफसें प्रसुप्त-मूर्छित हो वैसाथा. यह प्रपंच ज्ञानगोचर क्यों नहि होताथा ? इसका उत्तर कहतें हैकी-यह दृश्यमान जगत् कारणसें संगत-अविभक्तथा। अथवा सलिलको तुल्योपमक समझना चाहिये. सलिल-जल जसें दुग्धसें मिला हुवा दुर्विज्ञेय होता है वैसेंही अज्ञानसें अविभक्त प्रपंच ज्ञानगोचर होसक्ता नहिथा। ननु विविध और विचित्र अनेक रूपवाले प्रपंचका अतितुच्छ अज्ञानने अभिभव कैसे हुवा ? नीरकी अपेक्षासें क्षीर बलिष्ठ होनेंसें क्षीरसे नीराभिभव उपपन्न है, परंतु तुच्छ अज्ञान की जो निर्बल है उनसें बलिष्ठ प्रपंचका अभिभव कैसें हुवा ? "अज्ञानभी क्षीरकी तरह बलवत्तर है" ऐसा कहें तो दुर्बल जगत्का सृष्टिकालमें उद्भव कैसे संभवित है. इसका जवाब हैकी तुच्छयेनेति-आभु-उद्भवको पानेवाला प्रपंच सत् और असत्‌से विलक्षण भावरूप कल्पित तुच्छ अज्ञानसें आच्छादित था, यानें कारणात्मक अज्ञानसें अविभक्त होनेपरभी वह कार्यस्वरूपप्रपंच सदव्य पर्यालोचनात्मक तपश्चरणके महत्वनें प्रादुर्भूत हुवा है. स्रष्टव्यपर्यालोचनको "तपः" शब्दसें वेदमें व्यवहार किया है-जो परमेश्वर सर्वज्ञ है, और जिस परमेश्वरका तपश्चरण ज्ञानमय-पर्यालोचनात्मक है इत्यादि. ॥३॥

१२५. ८ ७ १७. कामस्तदग्रेसमवर्तताधिमनसोरेतःप्रथमंयदासीत ।
सतोबन्धुमसतिनिरविन्दन्हृदिप्रतीष्याकवयोमनीषा॥४॥

ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किं-निबन्धनमित्यत आह—कामस्तदग्रइति। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत सिसृक्षा जातेत्यर्थः। ईश्वरस्य सिसृक्षा वा किं हेतुकेत्यत आह—मनस इति। मनसः अन्तःकरणस्य संबन्धिवासनाशेषेण मायायां विलीनेन्तःकरणे समवेतं, सामान्यापेक्षमेकवचनं, सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः, एतेनात्मनो गुणाधारत्वं प्रत्याख्यातं। तादृशं रेतः भाविनः प्रपंचस्य बीजभूतं, प्रथममतीतेकल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत्, यतः कारणात् सृष्टिसमये आसीत्, अभवत्, भूष्णु वर्धिष्णुत्वजायत परिपक्वं सत् फलोन्मुखमासीत् इत्यर्थः, तत् ततोहेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायत इत्यर्थः। तस्यांच जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत्सृजति। तथाचाम्नायते—"सोकामयत बहुःस्यां प्रजायेयेति सतपोतप्यत सतपस्तप्त्वा इदंसर्वमसृजत यदिदंकिंचेति" (तैत्तिरीय २–६)। श्रुतिरात्मना इत्थमवगमितेर्थे विद्वदनुभवमपि अनुग्राहकत्वेन प्रमाणयति—सतइति। ततः सत्वेनेदानीमनुभूयमानस्य सर्वस्य जगतो बन्धुं बन्धकं हेतुभूतं, कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं, कवयः क्रान्तदर्शनाः अतीतानागतवर्तमानाभिज्ञा योगिनः हृदि हृदये निरुद्धया मनीषा मनीषया बुद्ध्या प्रतीष्य विचार्य असति सद्विलक्षणे अव्याकृते कारणे निरविन्दन् निःकृष्यालभन्त विविच्याजानन्नित्यर्थः॥४॥

अनुवाद—ननुपूर्वोक्तप्रकारसें ईश्वरकर्तृकपर्यालोचन प्रपंचोत्पत्तिमें कारण है तो वह पर्यालोचन किम्मूलक है? इसका प्रत्युत्तर कहते हैं—की इसविकृत वर्ग—प्रपंचकी पूर्वावस्थामें परमेश्वरके मनमें प्रपंचसिसृक्षात्मक काम प्रादुर्भूत हुवा. वह सिसृक्षात्मक काम किस हेतुसें हुवा? उसका उत्तर कहते है—की मायामें वासनाविशेषरूपसें विलीन सकल प्राणिके अन्तःकरणोंसें संबद्ध जो 'रेतः' है सो भाविप्रपंचका बीजभूत है, यानें प्रथम अतीत कल्पमें प्राणिनें पुण्यात्मक कर्म जिस कारणसें संपादित कियेथे वे कर्म सृष्टिकालमें परिपक्वावस्थापन्न होनेंसें फलोन्मुख हुवे. उसी हेतुसें सकलकर्मफलोंके दाता सर्वसाक्षी कर्माध्यक्ष परमेश्वरके मनमें सिसृक्षात्मक कामका आविर्भाव हुवा, यह तात्पर्य है. और वह सिसृक्षा जब परमेश्वरके मनमें हुइ तब स्रष्टव्य प्रपंचका पर्यालोचन करके सकल सृष्टिका ईश्वरनें प्रादुर्भाव किया. श्रुतिमेंभी कहा है—वह परमेश्वर इच्छा करते

भये की मैं अनेक रूप होजाउं, आलोचनात्मक तपश्चरण करके वह परमेश्वर इस समग्र प्रपंचको रचतेभये श्रुति (मन्त्र) ने जिस अर्थका बोध किया उसी अर्थमें दया करके श्रुति विद्वान्लोकोंका अनुभव भी बताती है-इस कालमें सद्रूपसें अनुभूयमान जगत्का हेतुभूत कल्पान्तरमें अनुष्ठित प्राणिमात्रके कर्मसमूहको कवि-भूतभविष्यद् और वर्तमानको जाननेवाले योगिलोक हृदयमें बुद्धिके निरोधद्वारा विचार-करके असत् सद्विलक्षण अव्याकृत कारणमें विवेकपुरःसर पूर्वोक्तकर्मसमूहको यथार्थ जानते हैं. ॥ ४ ॥

१२६ ८ ७ १७. तिरश्चीनोविततोरश्मिरेषामधःस्विदासीदुपरिस्विदासीत्
रेतोधाआसन्महिमानआसन्त्स्वधाअवस्तात्प्रयतिःपरस्तात्॥५॥

एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि, अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते, येयं नासदासीदित्यविद्या प्रतिपादिता, यश्च कामस्तदग्र इति कामः, मनसोरेतः प्रथमं यदासीत् इति यत्कर्म, एषामविद्याकामकर्मणां वियदादिभूतजातानि सृजतां, रश्मिः रश्मिसदृशः, -यथासूर्यरश्मिरुदयानन्तरं निमेषमात्रेण युगपत्सर्वं जगद्व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन्, यः कार्यवर्गो विततो विस्तृत आसीत्, स्विदासीदिति वक्ष्यमाणमत्रापि संबध्यते, स कार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितो मध्येस्थित आसीत् किंवा अधः अधस्तादासीत् आहोस्वित् उपरि उपरिष्टात्किमासीत्, उपरिस्विदासीदितिवा "आत्मनः आकाशः संभूतः आकाशाद्वायुः वायोरग्निरित्यादिक्या पञ्चमीश्रुत्या-तत उद्गातारं ततो होतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वात् एतेषु त्रिषु स्थानेषु प्राथम्यं कुत्र इति विचार्यते, एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते-सृष्टेषु कार्येषु मध्ये केचिद्वा रेतोधा रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारः भोक्तारश्च जीवा आसन्, अन्ये भावा महिमानः महान्तो वियदादयो भोग्या आसन्, एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः. अयमेवार्थस्तैत्तिरीयके-"तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा, अन्ननामैतत्, भोग्यप्रपंचः अवस्तात् अवरः निकृष्ट आसीत्,

प्रयतिः प्रयतिता भोक्ता परस्तात् परः उत्कृष्ट आसीत् भोग्यप्रपंचं भोक्तृप्रपंचस्य शेषभूतं कृतवानित्यर्थः ॥ ५ ॥

अनुवाद–इस प्रकार सृष्टिमें हेतुभूत अविद्याकामकर्मका प्रतिपादन किया. अब "यह अविद्यादिक अपनें अपनें कार्यको अतिशीघ्र रचते भये" ऐसा निरूपण करतें हैं–"नासदासीन" इस मन्त्रसें जो मूलाविद्याका प्रतिपादन किया, और "कामस्तदग्रे" इसमन्त्रसें जो कामका प्रतिपादन किया, और "मनसोरेतः प्रथमं यदासीत्" इससें जो कर्मका प्रतिपादन किया, आकाशादिकमहाभूतोंको कार्यरूपसें बनानेवाले इन् अविद्यादिकसमुदायका कार्यवर्ग सूर्यके किरणोंकी तरह सत्वर विश्वमें व्याप्त हुवा, जैसें सूर्यके किरण सूर्योदयके अनन्तर निमेष मात्रमें समस्त जगत्को अपनें स्वरूपसे व्याप्त करतें हैं, तैसेंही अविद्यादिक समुदायरूपकारणसें उत्पन्न भया हुवा कार्यवर्ग त्वरितही विश्वको व्याप्त करता भया. और यह विस्तृत कार्यवर्ग क्या मध्यप्रदेशमें अवस्थित था ? अथवा अधस्तन (नीचेके) प्रदेशमें अवस्थित था ? किंवा उपरितन प्रदेशमें अवस्थित था ? "इस आत्मासें आकाश उत्पन्न हुवा, आकाशसें वायु और वायुसें अग्नि" इत्यादिक मन्त्रोमें पञ्चमी विभक्तिके श्रवणसें "आचार्यादिकन्के बाद होताको और होताके बाद उद्गाताको" इत्यादिक मन्त्रप्रदर्शितक्रमानुसार यहांभी अविद्यादिसमूहसें उत्पद्यमान प्रपंचात्मक कार्यवर्गमें अनुक्रम प्राप्त होता है. परंतु विजलीके प्रकाशकी तरह यह कार्यवर्गके अतिशीघ्र सर्वत्र व्याप्त होनेसे क्रम अत्यन्त दुर्ज्ञेयहै. इन्तीनों स्थानोंमें प्राथम्य कहां हैं सो विचार किया जाता है, यानें बहुतही जल्दी कार्यवर्ग फैला हुवा है की जिसमें अनुक्रम पाया जाता नहिं. यही बात स्पष्ट कहतेहैं:–रचे हुवे कार्य वर्गके मध्यमें कोइ पदार्थ बीजभूत कर्मके विधान करनेवाले और उन् कर्मोंके फलोंको भोगनेवाले जीव थे. और अन्य पदार्थ वियदादिक सब भोग्यवर्गके अन्तर्गत थे. इस् प्रकार मायाउपहित परमेश्वर सकल जगत्को अविद्याकामकर्मद्वारा उत्पन्न करके उसीमें अनुप्रविष्ट हो करके भोक्ता और भोग्यादिरूपसे विभागको करते भये. तैत्तिरीयकमें भी कहा है की–प्रपंचको रचकरके उसीमें अनुप्रवेश परमेश्वरने किया है. इस् भोक्तृभोग्यात्मकप्रपंचमें भोग्यप्रपंच निकृष्ट था और भोक्तृप्रपंच उत्तम था यानें भोग्यात्मकप्रपंचका निर्माण भोक्त्रात्मक प्रपंचके शेषरूपसें किया गया है. ॥५॥

१२७. ८ ७ १७. कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः।
अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयतआबभूव ॥६॥

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता, "एतावद्वाइदं अन्नंचैवान्नादश्च सोम एवान्नमग्निरन्नाद" इतिवत्, अथेदानीं सा सृष्टिः दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह—कोअद्धेति। कःपुरुषः अद्धा पारमार्थ्येन वेद जानाति, को वा इहास्मिन्लोके प्रवोचत् प्रब्रूयात्, इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात्, कुतः कस्माच्च निमित्तकारणादाजाता समन्ताज्जाता प्रादुर्भूता, एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः। ननु देवा अजानन्तः सर्वज्ञास्ते ज्ञास्यंति वक्तुंच शक्नुवन्तीत्यत आह—अर्वागिति देवाश्चास्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यद्भौतिक सर्जनं सृष्टिः तेन अर्वाक् अर्वाचीनाः कृताः भूतसृष्टेः पश्चाज्जाता इत्यर्थः तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीना सृष्टिं जानीयुः, अजानन्तो वा कथं प्रब्रूयुः, उक्तं दुर्ज्ञानत्वं निगमयति—अथ एवं सति देवाअपि न जानन्ति, किल तद्व्यतिरिक्तः कोनाम मनुष्यादिर्वेद तत् जगत्कारणं जानाति यतः कारणात्कृत्स्नं जगदाबभूव अजायत ॥ ६ ॥

अनुवाद—इस प्रकार भोग्यभोक्तृस्वरूपसे सृष्टिसंग्रहका प्रतिपादन किया, अब यह सृष्टि दुर्ज्ञेय है इसलिये विस्तारसे नहि कहा सो कहते हैं—कौन पुरुष पारमार्थिक रीतिसे जानसक्ता? अथवा कौन पुरुष इस लोकमें (इस प्रपंचका) प्रवचन करसक्ता है? भूतभौतिकभोक्तृभोग्यादिकस्वरूपसे विविधाकार प्रतीयमान यह सृष्टि किस उपादान कारणसे और किस निमित्त कारणसे प्रादुर्भूत हुई है इन दोनो वृत्तान्तोंको कौन पुरुष यथार्थ जानसक्ता और कौन पुरुष सविस्तर कहेसक्ता है. ननु देवतालोक अज्ञात होनेपरभी सर्वज्ञहोनेसे जान सकेंगे? और विवेचनभी करसकेंगे? इसका उत्तर है कि—देवतालोक आकाशादिक भूतोंकी उत्पत्तिके अनन्तर भौतिक सृष्टिसे अर्वाचीन हैं, यानें भूतसृष्टिके अनन्तर प्रादुर्भाव को पाये हुवे देवतालोक अपनी उत्पत्तिसें प्राक्कालिक सृष्टिको कैसे जानसकें! और स्वयं (उस सृष्टिके) ज्ञानरहित होते हुवे कैसे प्रवचन कर सकें? जबकी देवतालोकभी इस कार्यरूपप्रपंचको नहिं जानसके तब

दूसरा कौन मनुष्य कार्यरूप प्रपंच और ( अभिन्ननिमित्तोपादान ) कारणात्मक परमेश्वरको कैसे जान सके? सर्वथा कार्य और कारण दुर्ज्ञेयहै ॥ ६ ॥

१२८. ८ ७ १७ इयंविसृष्टिर्यतआबभूवयदिवादधेयदिवान ।

योअस्याध्यक्षःपरमेव्योमन्त्सोअङ्गवेदयदिवानवेद ॥७॥१७॥

उक्तप्रकारेण यथा इदं जगत्सर्जनं दुर्विज्ञानम्, एवं सृष्टं जगत् तद्धृधरम- पीत्याह–इयमिति। यतः उपादानभूतात्परमात्मनः इयं विसृष्टिः विविधा गिरि- नदीसमुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता सोपि किल यदिवा दधे धार- यति यदिवा न धारयति एवं च कोनामान्योधर्तुं शक्नुयात्, यदिधारयेत् ईश्वरएव धारयेत् नान्यइत्यर्थः. एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मणउपादानकार- णत्वमुक्तं भवति। तथाच पारमार्षं सूत्रं–प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधादिति (ब्र. सू. १-४-२३)। यद्वा अनेनार्धर्चेन पूर्वोक्तं सृष्टिदुर्ज्ञानत्वमेव दृढयति–कोवेदेत्य- नुवर्तते, इयं विविधा सृष्टिर्यत आबभूव आसमन्तादजायतेति को वेद? नकोपि, नास्त्येव जगतो जन्म कदाचिदनीदृशं जगदिति बहवो भ्रान्ताः भवन्त्यपि, यतः यस्मात्परमा त्मनः उपादानभूतादाबभूव तं परमात्मानं कोवेद न कोपि, प्रकृतितः परमाणुभ्योवा जगज्जन्मेति हि बहवो भ्रान्ताः। तथा स एव उपादानभूतः परमात्मा स्वयमेव निमित्तभूतोपि सन्, यदिवा दधे विदधे इदं जगत्ससर्ज, यदिवा न ससर्ज। असंदिग्धे संदिग्धवचनमेतत् शास्त्राणि चेत्प्रमाणं स्युरिति यथा। स एव विदधे तं कोवेद? अजानन्तोपि बहवो जडात् प्रधानादकर्तृकमेवेदं जगत्स्वयमजायतेति विपरीतं प्रतिपन्नाः, विदधतो विधानमजानन्तोपि सएव उपादानभूत इत्यपि को वेद? नकोपि, उपादानादन्यः तटस्थ एवेश्वरो विदध इति बहवः प्रतिपन्नाः, देवा अपि य न जानन्ति तदर्वाचीनाना मेषां तत्परिज्ञाने कैव कथेत्यर्थः। यद्येवं जगत्सृष्टिरत्यन्तदुर- वबोधना तर्हि सा प्रमाणपद्धतिमध्यास्त इत्याशंक्य तत्सद्भावे ईश्वरः वेदं प्रमाण- यति–यो अस्येति, अस्य भूतभौतिकात्मकस्य जगतो योध्यक्ष ईश्वरः परमेउत्कृष्टे सत्यभूते व्योमन् व्योमनि आकाशे आकाशवन्निर्मले स्वप्रकाशे ? द्वा व्योमनि विशेषेण सृप्ते निरतिशयानन्दस्वरूप इत्यर्थः। यद्वा अवतिर्गत्यर्थ, ‥व्योमनि विशेषेण गन्तव्ये देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः। अथवा अवतिर्ज्ञानार्थः व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि ईदृशे स्वात्मनि प्रतिष्ठितः। ध्रुवेदि-

सनत्कुमारनारदयोः संवादे "स भगवः कस्मिन् प्रतिष्ठित" इति " स्वे महिम्नीति" । (छांदोग्य उ. ७-२४-१) ईदृशो यःपरमेश्वरः सो अंग अंगेतिप्रसिद्धौ, सोपि नाम वेद जानाति यदि वा न वेद न जानाति कोनामान्यो जानीयात् सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः ॥ ७ ॥ १७ ॥

अनुवाद—पूर्वोक्त प्रकारसें जैसें 'इस जगतकी रचना दुर्ज्ञेय है तेसेही रचेहुवे इस जगतको धारण करना दुःशक है यानें दुर्धर है," यह वृत्तान्त इस मन्त्रमें कहते हैं—गिरि नदी समुद्रादि अनेक विचित्र प्रकारसें प्रतीत होता हुवा यह जगत् जिस उपादानकारणरूप परमात्मासें प्रकट हुवा है, वह परमेश्वरभी इस् जगत्का धारक है, किंवा नहिं ? यानें अगर इस् जगत्को अधिष्ठानरूपमें धारण कोइ करता है तो वह परमेश्वरही है, इसके सिवाय अन्य कोइभी धारण करनेको शक्तिमान् नहिं है, यह तात्पर्य है " जगद्रूप कार्यका परमेश्वरही धारक है " ऐसा प्रतिपादन करनेसें उस परमेश्वरका उपादान (कारण)त्व सिद्ध होताहै और इसमें ब्रह्मसूत्र ( १-४-२३) भी अनुगत होताहै—" प्रकृति-श्चप्रतिज्ञादृष्टान्तानुपरोधात् ". एकविज्ञानसें सर्वविज्ञानकी प्रतिज्ञा श्रुतिमें कही गई है, और " एक मृत्तिकाविज्ञानमात्रसें जैसें सर्व मृण्मय विकृतपदार्थ विज्ञात होतेहै, तैसेही ब्रह्मरूप उपादान कारणके विज्ञानसें सकल विकृतवर्ग विज्ञात होता है " इत्यादिक दृष्टान्तोंके अनुसार ब्रह्म जगत्का ( प्रकृति ) उपादान कारणभी है, यानें निमित्ततो है ही है, एवंच अभिन्ननिमित्तोपादा-नता सिद्ध होती है. यद्वा इस् अर्धर्चसें पूर्वोक्त सृष्टिकी दुर्ज्ञेयताही दृढ करते है—यह विविधसृष्टि जिस् ( उपादान ) कारणसें प्रादुर्भूत हुई, उस् ( कार्य ) को कौन जानसका है ? कोइभी नहिं, " जगत्का जन्म किसी कालमें है ही नहिं, यह जगत् पूर्व कालमें ऐसाही है " इस् प्रकार अनेक लोक भ्रान्त होते है. और जिस् उपादानकारणभूत परमेश्वरसें यह विविध सृष्टि आविर्भूत हुई उस् परमेश्वरको यथार्थरूपसें कौन जानसका है ? कोइभी नहिं. अनेक लोक प्रकृतिसें अथवा परमाणुसें जगत्का जन्म मान करके भ्रान्तिमें पडे हुवे हैं. उसी तरह वही उपादान कारणभूत परमेश्वर स्वय निमित्तभूत होकरकेभी अगर जगज्जन्म करता हो तो करता हो, यानें यह निश्चित अर्थमें संदेहजनक वाक्य है, जैसें " अगर शास्त्र प्रमाण हो " इत्यादि वाक्योंका निश्चित अर्थ होनेपरभी,

संशयमें तात्पर्य है, तैसेंही यह वेदवाक्य है. तात्पर्य इसका यही है की वही परमेश्वर जगज्जन्मादिक कर्ता है उसको कौन जान सक्ता है ? अनेक अज्ञानी लोक " जड प्रधानसें कर्तृनिरपेक्ष जगत् स्वयं बना हुवा है " ऐसा विपरीत ज्ञानको पाये हुवें हैं, जगज्जन्मको नहिं जानकेभी " वही परमात्मा उपादान कारणरूप है " ऐसा कौन जानसक्ता है ? कोइ लोकतो ऐसा कहते हैकी उपादानकारणसें अतिरिक्त-तटस्थ होकरके ईश्वर निर्माण करताहै. देवतालोक भी जिस तत्वको यथार्थ रीतिसें नहिं जानसक्ते तो अर्वाचीनकालके लोक न जानें इसमें कौन आश्चर्यहै ! यदि इस प्रकार यह सृष्टि परम दुर्बोध है तो इस के सद्भावमें प्रमाणभूत वेदको परमेश्वर खुद कहते हैकी-भूतभौतिकात्मक इस जगत्का अध्यक्ष जो ईश्वर है सो सर्वोत्कृष्ट त्रिकालाबाधित आकाशवत् निर्लेप-निर्मल स्वकीयप्रकाशमें अथवा स्वकीय निरतिशयआनन्दरूपमें अथवा देश-कालादिकसें अपरिच्छिन्न निजस्वरूपमें अथवा विशिष्टज्ञानात्मकस्वरूपमें प्रतिष्ठित है. श्रुतिमें ( छां. ७-२४-१ ) सनत्कुमार और नारदके संवादरूपसें कहाहैकी-हे भगवन् ! यह आत्मा किसमें प्रतिष्ठित है ? (उत्तर) स्वकीय महि-मामें वह ( आत्मा ) प्रतिष्ठित है. ऐसा वह परमेश्वर अगर जानता होतो जान सक्ता है. इससें अन्य कोइ जान सक्ता नहिं, यानें सर्वज्ञ ईश्वरही स्वयं रची हुई सृष्टिको जानता है, अन्य नहिं. ॥ ७ ॥

१२९. ८ ७ १८ योयज्ञोविश्वतस्तन्तुंभिस्ततएकंशतंदेवकर्मेभिरायतः।
इमेवयन्तिपितरोयआंययुःप्रवयापवयेत्यांसतेतते ॥ १ ॥

तन्तुभिस्तनितृभिः विस्तारयितृभि र्वियदादिभूतैर्यः सर्गात्मको यज्ञः विश्वतः सर्वतस्ततो विस्तृतः, तथा एकशत मेकं च शतं च एकशतं संख्येति एकोत्तरशतमि-त्यर्थः, ब्रह्मा येषु शतसंख्येष्वात्मीयसंवत्सरेषु जीवति तदभिप्रायेणात्र शतसंख्या, जीवता तेन प्रजापतिना सार्धमेकशतमित्युच्यते, यथा शतायुर्वै पुरुषः शतवीर्य आत्मै-कशत इति ब्राह्मणः शतसंवत्सरपर्यन्तं देवकर्मभिर्देवानुद्दिश्य ओवतृभिः कृतैः कर्म-भिरायतः दीर्घीभूतः तावत्कालावस्थायी एवमायामविस्तारवान्, पितरः पालकाः प्रजापतेः प्राणभूताः विश्वसृजो देवाः वयन्ति निर्मिमते, ये देवा आययुः सृष्टं सर्व जगत् स्ववपनेन व्यापुः, अपिच प्रवयापवयेति, प्रवाणं नाम प्रकृष्टस्य चेतनस्य ,

भोक्तृप्रपंचस्य सर्जनम्, अपवानं नाम अपकृष्टस्य निकृष्टस्याचेतनस्य भोग्यप्रपंचस्य सर्जनं, प्रवयापवयेति वयन्तः प्रवाणमपवानं च कुर्वन्त इत्यर्थः, एवंभूताः सन्तः ते विश्वसृजः तते विस्तृते सत्यलोके आस्ते प्राणरूपेण प्रजापतिमुपासते ॥ १ ॥

अनुवाद–जगत्को विस्तारनेवाले इस आकाशादिक भूतोंसे जो यह सर्गात्मक यज्ञ सर्व ( तरफ ) प्रकारसें विस्तारको पाया है, एकाधिकशतसंवत्सर पर्यन्त स्वर्कीयकालपरिमाणसें ( जिस् सर्गमें ) ब्रह्मा प्राण धारण करतें है " शतायुर्वै पुरुषः शतवीर्य आत्मा एकशतः " इस श्रुतिसिद्ध नियमानुसार ब्रह्माके एकोत्तरशतसंख्यापरिमितसंवत्सरपर्यन्त देवोंका उद्देश करके फलोपभोगमें आसक्त अधिकारिलोकने अनुष्ठित किये हुवे कर्मसें यह सर्गात्मक यज्ञ आयत-दीर्घ है, यानें तावत्परिणामक आयाम विस्तारवान् है की यावत्परिमाणक ब्रह्माका प्राणधारणानुकूलव्यापार है. जो देवतालोक सृष्टव्यसमग्रजगत्को अपनी वयन (सर्जन) क्रियासें व्याप्त करतें है, वही देवतालोक पालक-रक्षक होते हुवे और प्रजापतिके प्राणरूप होते हुवे " विश्वसृज " नामक होते हुवे निर्माण करतें हैं. और वही " विश्वसृज " नामकदेव प्रवाण-भोक्तृप्रपंचकी रचना, अपवान–अपकृष्ट निकृष्ट अचेतन भोग्यप्रपंचकी रचना करते हुवे विस्तृत सत्यलोकमें प्राणरूपसें प्रजापतिकी उपासना करतें है. ॥ १ ॥

१३०. ८ ७ १८ पुमाँएनंतनुतउत्कृणत्तिपुमान्वितत्नेआधिनाकेअस्मिन् ।
इमेमयूखाउपसेदुरूसदःसामानिचक्रुस्तसराण्योतवे ॥ २ ॥

पुमान् पुरुषः आदिपुरुषः प्रजापतिः एनं यज्ञं तनुते विस्तारयति सृष्टवानित्यर्थः। तथा च ब्राह्मणं "स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजते"ति। "प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनुब्रह्मक्षत्रे असृज्येताम्" इति च। सएव पुमान् सृष्टं तं यज्ञमुत्कृणत्ति, सएव पुमान् प्रजापतिः अस्मिन् मूलोके नाके, अकं दुःखं नास्त्यस्मिन्निति नाकः स्वर्गो लोक, तत्र च वितत्ने इमं यज्ञं विस्तारयति, तस्य मयूखाः रश्मिभूताः तस्य प्रजापतेः प्राणात्मका इमे विश्वसृजो देवाः सदा सदनं देवयजनं स्थानमुपसेदुः, विश्वसर्जनहेतुभूतं विश्वसृजामयनाख्यं यज्ञं कर्तुमुपसीदन्ति, उपसद्य च सामानि रथन्तरादीन्योतवे वयनाय यज्ञाख्यं वस्त्रमोतुं तसराणि तिर्यक्सराणि तिरश्चीनसूत्राणि चक्रुः ॥ २ ॥

१३४ ८ ७ २३. यस्मिन्वृक्षे सुपलाशेदेवैः संपिबतेयमः।
अत्रानोविश्पतिः पितापुराणाँ अनुवेनति ॥ १ ॥

वृक्षे लुप्तोपममेतत्, वृक्षवत् सुपलाशे शोभनपलाशोपेते शोभनोद्यान- सहिते यद्वा शोभनपर्णोपेते वृक्षे तादृशस्य वृक्षस्य मूलं यथा ऊष्मजनितश्रमा- पनोदनेन सुखकरं भवति तद्वत्सुखकरे यस्मिन्स्थाने देवैः परिजनभूतैः यमो नियन्ता वैवस्वतः संपिबते सहसुङ्क्ते पिबतीत्यर्थः। विश्पतिर्विशां प्रजानामधिपतिः पिता नः व्यत्ययेनबहुवचनम् मम नचिकेतसो जनको वाजश्रवसः अत्रास्मिन् यमस्यस्थाने पुराणान् पुरातनान् अत्रचिरकालं निवसतः पितॄननु तेषां पश्चात्तत्समीपे निवसत्वयमिति वेनति मा कामयते "नचिकेता नाम कुमारः वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम" अयमर्थः इदमादिभिर्मन्त्रैः प्रतिपाद्यते। यद्वा कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः यच्छतीति यम आदित्यः तमनेन सूक्तेन तुष्टाव सुपलाशे वृक्षइव यस्मिन् शोभने स्थाने यम आदित्यः देवैः दीव्यन्तीति देवा रश्मयः तैः संपिबते संगच्छते। अत्रास्मिन्स्थाने स्थितो विश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता प्राणात्मना सर्वेषां जनकः स आदित्यः पुराणान् चिरंतनान् स्तोतॄन् नोऽस्मानपि वेनति अनुग्राह्यत्वेन कामयते। यद्वा अत्रस्थाने स्थितान् नोऽस्माकं पुराणान् पूर्वपुरुषान् अनुवेनति अनुक्रमेण कामयते ॥ १ ॥

अनुवाद-सुन्दर पत्रवाले वृक्षकी छाया जैसे परिश्रमको दूर करनेमे सुखकर होती तैसे सुखप्रद जिस स्थानमें परिजनभूत देवोंके साथ सकलका नियन्ता वैवस्वत यमराज सुखानुभव करते है प्रजाके अधिपति मेरे (नचिकेताके) पिता वाजश्रवस इसी यमराजके स्थानमें चिरकालसे निवास करते हुवे पितृओंके साथ "यह बालक भी निवास करे" ऐसी मेरे (नचिकेताके) लिये इच्छावाले हुवे है। (नचिकेता नामके बालकको वाजश्रवस नामके महर्षिने यमलोकमें भेजा, वहा यमराजका दर्शन करके और उनको प्रसन्न करके फिरसे वह बालक इस मर्त्यलोकमें आया है यह अर्थ एतदादिक मन्त्रोंसे प्रदर्शित किया जाता है. (और यही वृत्तान्त कठवल्लीमेंभी विशद और विस्ताररूपमें कहा है) अथवा कुमारनामक नचिकेतासे अन्य कोइ ऋषिविशेष सूर्यनारायणकी इस सूक्तसे

स्तुति करतें भये। सुन्दरपत्रवाले वृक्षकी तरह जिस उत्तम स्थानमें आदित्य-देव अपनें किरणोंके साथ प्राप्त होतें है, उस स्थानमें प्रजाका प्रकाशन और वर्षणादिकनमें पालन करनेवाले और प्राणस्वरूपसें सबका जनक यह आदित्य-देव, चिरकालसें स्तुति करते हुवे हमको अनुग्राह्य मानके चाहतें है। अथवा इस स्थानमें रहे हुवे हमारे पूर्व पुरषोंको अनुक्रमसें चाहतें है। ॥ १ ॥

१३५. ८ ७ २२ पुराणाँअनुवेनन्तंचरन्तंपापयामुया

असूयन्नभ्यचाकशंतस्माअस्पृहयंपुनः ॥ २ ॥

पुराणान् पुरातनान् पितॄननुवेनन्तं मामनुगतं कामयमानं ममुया अनया पापया निकृष्टया बुद्ध्या सह चरन्तं वर्तमानं पितरं वाजश्रवस मसूयन् सुखेन जीवन्त मा " मृत्युसमीपं प्रेहीत्युक्तवान् " इति मानसेनोपतापेन दुःखः सन् प्रथम-मभ्यचाकशम्, अभ्यपश्यम्। पुनः पश्चात्तस्मा अस्पृहय पितुराज्ञया तं मृत्युमाप्तु-मैच्छम्। यद्वा पुराणान् चिरन्तनान् स्तोतॄन् पुर्वपुरुषान् पितॄन्वा अनुवेनन्त-मनुक्रमेण कामयमानं चरन्त मुदयास्तमयाभ्या दिवि परिवर्तमानमनया पापया निकृष्टया स्तोतुमसमर्थया बुद्ध्या असूयन् " गुणेषुदोषाविष्करणमसूया " पर-कीयगुणेषु दूषणान्याविष्कुर्वन् अभ्यचाकशम्, अयमपि कश्चिदिति सामान्यरू-पेणाभ्यपश्यम्, इदानीं तु पुनः तस्यादित्यस्य माहात्म्यं जानन् तस्मा अस्पृहयम्, तमेवादित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च आप्तुमैच्छम् ॥ २ ॥

अनुवाद–प्राचीन पितृओंके पास मेरे गमनको चाहते हुवे और निकृष्ट इस बुद्धिसें युक्त वाजश्रवस-पिताके गुणोंमें दोषारोपणरूप असूया करते हुवे, और सुखपूर्वक जीवनको व्यतीत करते हुवे मुझको " तुम मृत्यु-यमराजके समीप जाओ " ऐसा कहनेंसे मानसिक परितापमेंयुक्त में प्रथम देखता भया। उसके अनन्तर पितामें स्पृहातुर में हुवा, यानें पिताकी आज्ञासे उस मृत्यु यम-राजके पास जानेको में इच्छता भया। अथवा स्तुति करनेवाले प्राचीन पुरुषोंको अथवा पितृओंको अनुक्रमसें चाहते हुवे और उदय और अस्तसें आकाशमें विहार करते हुवे आदित्य देवको स्तुतिमें अशक्त ऐसी बुद्धिसें गुणोंमें दोषारोपण-रूप असूयाको करता हुवा में " यहभी कोइ है " ऐसा सामान्य अवलोकन

१२३. ८ ७ १८ विराणिमत्रावरुणयोरभिश्रीरिन्द्रस्यत्रिष्टुविहभागोअह्नः।
विश्वान्देवाञ्जगत्याविवेशतेनचाक्लृप्रऋषयोमनुष्याः॥५॥

अपिच मित्रावरुणयोर्देवयोः विराट्छन्दः अभिश्रीः अभिश्रिता आश्रिता आसीत, विराजा सह मित्रावरुणावपि प्रजापतेः सकाशादजायेतामित्यर्थः। इहास्मिन्यज्ञे अह्नः सवनत्रयरूपस्य भागो मध्यंदिनसवनाख्योंशः त्रिष्टुप्छन्दश्च इन्द्रस्य अभिश्रयणायास्तां, ताविन्द्रश्च प्रजापतेः सकाशादजायन्त इत्यर्थ। तथाचैतत्तैत्तिरीयकम् "उरसोबाहुभ्यांपञ्चदशंनिरमिमीत तमिन्द्रोदेवतान्वसृज्यत त्रिष्टुप्छन्दो बृहत्सामेति"। तथा विश्वान् सर्वान्देवान् जगतीछन्दः आविवेश प्रविष्टवती, विश्वेदेवा जगती च प्रजापतेरजायन्तेत्यर्थ। तथाच तैत्तिरीयकम् "तंविश्वेदेवादेवताअन्वसृज्यन्त जगतीछन्दोवैरूपंसाम" इति। उक्तेन प्रकारेण प्रतिमा कासीत्, छन्दः किमासीत्, प्रउगं किमुक्थमिति त्रयाणा मुत्तरं जातं। आज्यं किमासीत, परिधिः कआसीत् इत्यनयोरुत्तरं पुरुषसूक्ते द्रष्टव्यं। तत्र ह्येवमाम्नायते "देवायज्ञमतन्वत वसन्तो अस्यासीदाज्यंग्रीष्मइध्मः शरद्धविः। सप्तास्यासन्परिधय स्त्रिः सप्तसमिधः कृता." इति। अयमर्थः-सर्वरसोत्पादको वसन्तस्तस्य जगत्सर्जनसाधनस्य यज्ञस्य आज्यमासीत्, आज्यदध्यादिभी रसैः सार्धं तादृशो वसन्तोऽजायतेत्यर्थः। सर्वरसानां शोषको ग्रीष्मऋतुः इध्म आसीत्, शुष्कैः काष्ठैः सार्धं ग्रीष्मोऽजायतेत्यर्थः। पच्यमानव्रीहियुक्तः शरदृतुः तस्य यज्ञस्य हविरासीत, सप्तछन्दांसि त्रिःसप्त एकविंशतिर्वा भूत्वा अष्टादश समिधः त्रयःपरिधयश्चासन्। कासीत्प्रमा प्रतिमा किं निदानमित्यनयोरपि प्रश्नयोरप्येवमुत्तरं पूर्वे विश्वसृजोऽमृताः शतं वर्षसहस्राणि दीक्षिताः सत्रमासतेति "एतेनवैविश्वसृजइदंविश्वमसृजन्त" इति च तैत्तिरीयके समाम्नायते। अतस्तस्य यज्ञस्य सहस्रसंवत्सरपरिमितः कालः प्रमाणं, विश्वस्य जगतः सर्जनादिकारणं प्रवर्तकं फलमित्यर्थः। एतदुक्तं भवति-यदा विश्वसृजोदेवाः देव प्रजापतिं विश्वसृजामयनाख्येन यागेनायजन् तदा उक्ताः सर्वा यागोपकरणाः प्रजापतेः सकाशादजायन्तेति। यतोग्न्यादिदेवताभिः सह गायत्र्यादीनि सप्त छन्दांसि जातानि, अतोहेतोः तेषां छन्दसा अग्न्यादयो देवता इति। छन्दोऽनुक्रमणिकायां सूत्रितं च "अग्निः सवितासोमो बृहस्पति र्मित्रावरुणा विन्द्रोविश्वेदेवादेवता" इति। एवं प्राजापत्यो यज्ञोऽनुष्ठितः तेन यज्ञेन ऋषयो मनुष्याश्च चाक्लृप्रे चक्लृपिरे क्लृप्ताः सृष्टा आसन् तेनैव यज्ञेन सर्वं जगदसृजन्नित्यर्थः॥५॥

अनुवाद-मित्रावरुणनामक उभयदेवमें विराट्छन्द आश्रय करके रहा है यानें विराट्छन्दके साथ मित्रावरुण देव प्रजापतिसें प्रकट हुवे। और इस यज्ञमें सवनत्रयात्मक दिनका भाग मध्यंदिनसवनाख्यअंश और त्रिष्टुप्छन्द इन्द्र देवके आश्रयणीय हुवे, याने पूर्वोक्त अंश और त्रिष्टुप्छन्द और इन्द्र देव प्रजापतिसे प्रकट हुवे। तैत्तिरीयक में कहा है की "प्रजापतिके उरःस्थलसें और बाहुसें पञ्चदश" का निर्माण हुवा. उसके अनन्तर इन्द्र देव बृहत् साम और त्रिष्टुप्छन्दके साथ प्रकट हुवे. और उसी तरह विश्वेदेव और जगतीछन्द प्रजापतिसें प्रकट हुवे, यह बात भी उसी तैत्तिरीयक श्रुतिमें कही है। पूर्वोक्त प्रकारसें प्रतिमा छन्द और उक्थ एतद्विषयक प्रश्नका समाधान हुवा. आज्य और परिधिके विषयमें पुरुषसूक्तोक्त उत्तर संगत है, पुरुषसूक्तमें कहा है की "सकलरसोत्पादक वसन्त ऋतु जगदुत्पादक साधनात्मक यज्ञका आज्य था, ग्रीष्म समिध था, और शरद् हविष्य था, यानें शुष्ककाष्ठादिकन्केसाथ शोषक ग्रीष्म प्रकट हुवा. और परिपक्व होने हुवे व्रीहियवादिसे युक्त शरदृतु हविष्यरूपसें प्रकट हुवा, सप्त छन्द एकविंश प्रकारसें बन करके अष्टादश समिध और तीन परिधिस्वरूपसें प्रकट हुवे। प्रतिमा और आदिकारणविषयकप्रश्नद्वयकाभी इसी प्रकार उत्तर है, पूर्व " विश्वसृज " नामक देव शतसहस्रवर्षपर्यंत दीक्षित हो करके इस महायज्ञको विस्तृत करते भये, यह प्रसंग तैत्तिरीयकमें स्पष्ट प्रतिपादित किया है. "विश्वसृज देव इस विश्वको उत्पन्न करते भये", इस हेतुसे उस यज्ञका सहस्रसंवत्सरपरिमित समय प्रमाण है, और जगतका सर्जनादिकारण यानें प्रवर्तक फल है। इसका यह तात्पर्य है की जब विश्वसृज नामक देव प्रजापतिदेवको विश्वसृजके अयनाख्य यागसें यजन करते भये तब पूर्वोक्त सकलयागके उपकरण प्रजापतिसें प्रकट हुवे, और अग्न्यादिक देवके साथ गायत्र्यादिक छन्द प्रकट हुवे है, इसी लिये उन् छन्दोंकी अग्न्यादिक देवता है यानें जिस छन्दके साथ जिस देवताका आविर्भाव हुवा है उस छन्दकी वही देवता है- छन्दोविचितिमें सूत्र हैकी "अग्नि, सूर्य, सोम, बृहस्पति, मित्रावरुण, इन्द्र और विश्वेदेव यह सब तत्तच्छन्दकी देवता है". इस प्रकार प्रजापत्युद्देश्यक यज्ञके अनुष्ठानसें ऋषि और मनुष्य प्रकट हुवे, यानें उसी यज्ञसें सकलविश्व आविर्भावको पाया भया है ॥ ५ ॥

करता भया । परंतु इस समय उन् आदित्य देवकी कृपाद्वारा उन्के माहात्म्यको जाननेसें उन् आदित्य देवहीमें स्पृहा करता भया, यानें उनी आदित्य देवको स्तुति और परिचर्यात्मक कर्मोंसें प्राप्त होनेंको चाहता भया ॥ २ ॥

१३६. ८ ७ २३ यंकुमारनवंरथमचक्रंमनसाकृणोः।

एकेषंविश्वतःप्राञ्चमपश्यन्नधितिष्ठसि ॥ ३ ॥

नचिकेतसंज्ञं कुमारं यमः अनयोत्तरया च प्रलोभयति, हे कुमार ? नवमभिनवम् इतःपूर्वमदृष्टं, अभिनवत्वमेव व्यनक्ति-अचक्रं चक्ररहित मेकेषं एका ईषा यस्य तादृशं तथापि विश्वतः सर्वतः प्राञ्चं प्रकर्षेणाञ्चन्तं गच्छन्तं यं रथं मनसा अकृणोः मत्समीपं प्रतिगमनाय अध्यवसायात्मकम् ईदृशं यं रथमकरोः, कृत्वा चापश्यन् कर्तव्याकर्तव्यविभागमजानन्नधितिष्ठसि रथमारोहसि । यद्वा स्तोतारं कुमाराख्यमृषिमादित्यः प्रत्यक्षः सन् देहात्मनोर्विवेकं बोधयति-हे कुमार ऋषे चक्ररहितं एकेषं एकः प्राण ईषास्थानीयो यस्य ईदृशमभिनवं सर्वतोगच्छन्तं शरीरात्मकं यं रथं मनसा अन्तःकरणेन अकृणोः अकरोः संकल्पात्मकेन मनसा हि कामो जायते, सत्या हि कामानायां पुण्यपापात्मकं कर्म क्रियते तेन च भोगप्रदानायेदं शरीरमारभ्यत इति परंपरया मनसः शरीरनिष्पादकत्वं, तं शरीरात्मकं रथं अपश्यन्नजानन् सत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि भोगायतनत्वेन स्वीकरोषि ॥ ३ ॥

अनुवाद-नचिकेता नामक कुमारको यमराज इस ऋचासें और अग्रिम ऋचासें प्रलोभन करतें हैं—हे कुमार ? आज दिन पर्यन्त अदृष्ट अत्यन्तनूतन चक्ररहित एकही लाङ्गलदण्डके सहित, तथापि सर्वतरफसें उत्तमगतिवाले अध्यवसायात्मक जिस रथको बना करके मेरे समीप आनेके लिये तुम तत्पर हुवे, और कृत्याकृत्यके विभागको न जानने हुवेभी उसीरथमें अधिष्ठित हुवे हो । अथवा स्तुति करनेवाले कुमारनामक ऋषिको आदित्य प्रत्यक्ष हो करके देह और आत्माका विवेकविषयक बोध करतें हैं.—हे कुमार ऋषे ! चक्ररहित प्राणात्मक ईषादण्डवाले अत्यन्तनवीन, और सर्वतःगमनवाले इस देहात्मक रथको अन्तःकरणसें तुमनें रचा है, संकल्पात्मक मनसें कामना होती है और कामनाद्वारा पुण्यपापात्मक कर्म होतें है, और उनी कर्मोंसें भोगोपभोगार्थ इस शरीरका

आरंभ होता है, इसलिये परंपरासे मनही देहका निष्पादक है। उसी देहात्मक रथको नहि जानते हुवे उसका भोगार्थ स्वीकार तुम करचुके हो. और इसमें आत्माका अपरिज्ञानही हेतु है॥ ३॥

इस पूर्वोक्त आख्यायिका का सविस्तर निरूपण कठवल्लीमें किया है-जब नचिकेता यमराजके परोक्ष उनके स्थानमें पहुंचे तब तीन रात्रि पर्यन्त असत्कृत रूपसें रहे, यानें यमराज न होनेसें उनोने खानपानादिकसत्कारका स्वीकार किया नहि. यमराज जब बहारसे आये तब कहनें लगे की हे कुमार? तुम हमारे स्थानमें आयके तीन रात्रि पर्यन्त उपोषित-असत्कृत रहे हो, इसलिये हमसे तुम तीन वर (दान) मागो. तब नचिकेतानें एक वरमें ब्रह्मविद्याके बोधकी भी याचा किया, उसके अनन्तर यमराजनें उसके अधिकारकी परीक्षाके लिये प्रियतर पदार्थोंका प्रदर्शन करके प्रलोभन किया है. यह बात प्रलोभनरूपसें इस मन्त्रमें कहतें हैं. पक्षान्तरमें कुमारनामक ऋषिविशेषने सूर्यकी स्तुति की, तब सूर्यनारायण प्रत्यक्ष होकरके ज्ञानोपदेश करते भये॥

१३७. ८ ७ २३ यंकुमारप्रावर्तयोरथंविप्रेभ्यस्परि।

तंसामानुप्रावर्ततसमितोनाव्याहितम्॥ ४॥

हे कुमार नचिकेतः? यं पूर्वोक्तमधिष्ठितं रथं प्रावर्तयः मत्समीपं प्रत्यगमयः विप्रेभ्यो मेधाविभ्यः परि उपरि भूलोके वर्तमानानां मेधाविनां बान्धवानामुपरिष्टादन्तरिक्ष इत्यर्थः। तं रथं साम पित्रा कृतं सान्त्वनं यमसमीपं गत्वा एवमेव त्वया वक्तव्यमिति प्रत्यागमनकारण मुपायोपदेशन मनुप्रावर्तत इतोस्माल्लोकादन्वगच्छत्, कथंभूतं नावि नौवत् तरणसाधनायां बुद्धौ समाहितं सम्यग्धृतं. यद्वा हे कुमार ऋषे यं शरीरात्मकं रथम् अधिष्ठितं प्रावर्तयः संसारं प्रवर्तितवानसि, मेधाविनां मध्ये तं रथं अनुसाम, उपलक्षणमेतत्, ऋक्सामादिसाध्यं स्तोत्रं नावि नौवत्तारयित्र्यां वाचि वेदात्मिकायां समाहितं सम्यक् प्रतिपाद्यत्वेन हितं कर्मच इतः अस्मिन् लोके प्रावर्तत प्रवृत्तमभूत्, इत्थं 'आत्मस्वरूपापरिज्ञानेन शरीरबन्धनं तेन कर्तव्यं व्यवहारजातं चोक्तं। 'अथतु' सत्यज्ञानादिस्वरूपमकर्तारं, परमात्मानं यदि स्वात्मतया साक्षात्करोति तदोक्तं न संभवतीत्यभिप्रायः ४॥'

अनुवाद—हे कुमार ! ( नचिकेत : ! ) पूर्वोक्त अधिष्ठित जिस् रथको मूलोकमें वर्तमान मेधावि-बान्धवोंके उपरितन-अन्तरिक्ष-मार्गमें मेरे समीप आनेके लिये तुमनें चलाया, उसी रथके भीतर संसारतरणमें नौकाकी तरह साधन-भूत बुद्धिमें सम्यक्प्रकारसे धारण किया हुवा " यमराजके निकट जाकरके तुमनें ऐसा ऐसा कहना " इत्यादिक पिताने कहा हुवा सान्त्वन प्रत्यागमनकारण-उपायोपदेश अनुगत-अवस्थित है, यानें तुमारे अध्यवसायात्मक रथमें पितृपदिष्ट उपायोपदेशात्मक आगमनकारण अवस्थित है. अथवा सूर्यपक्षमें-हे कुमार ऋषे! जिस् अधिष्ठित शरीरात्मक रथको संसारमें तुम चला रहे हो ? मेधावियोंके मध्यमें उसी रथमें ऋक्सामादिसाध्य नौकाकी तरह तारनेवाली वेदवाणीमें सम्यक् प्रतिपादित स्तोत्र और हितकर्म इस् लोककी भीतर आश्रित है, यानें आत्मस्वरूपके अज्ञानसें देहबन्धन और देहसें करनें योग्य व्यवहार बताया, और जबकी सत्यज्ञानानन्दस्वरूप अकर्ता परमात्माको स्वस्वरूपत्वेन साक्षात् करता है तब देहबन्धन और कर्तव्यकार्य संगत होसक्ता नहिं. ॥ ४ ॥

१३८. ८ ७ २३ कःकुमारमजनयद्रथंकोनिरवर्तयत् ।

कः स्वित्तद्द्यनोब्रूयादनुदेयीयथाभवत् ॥ ५ ॥

कः पुरुषः इमं कुमार मजनयत्, अधिक्षेपे किंशब्दः, कीदृशं बालं यम-समीपं प्रहिण्वन् कथं पिता समीचीनः स्यात्, तत्तावदास्तां, कोवा पुरुषः अस्य बालस्य यमसमीपं प्रतिगमनाय तं रथं निरवर्तयत् निर्वर्तितवान् सोपि मूर्ख इत्यर्थः। यथा येनप्रकारेण अयं कुमारः अनुदेयी अनुदातव्यार्थोऽभवत् भवति तत्तत्तुल्यं वचन मुपायकथनं अद्यास्मिन्काले नोस्माकं कःस्वित् को नाम ब्रूयात् अभिदध्यात् प्रथमं यमसमीपं गत्वा पश्चात्ततोनिर्गमनोपायं ब्रुवन्नपि न प्राज्ञ इत्यर्थः। अथवा कुमाराख्य ऋषिः आत्मनः सार्वात्म्यमवगच्छन् स्वव्यतिरिक्तस्यान्यस्यासंभवं किंशब्देन आक्षेपवाचिना, दर्शयति—कुमारं मां कः पिता अजनयत् न कोपि, " अजोनित्यः शाश्वत " इति (क. १२-१८) श्रुत्युक्तरूपोहं भवामि, कश्च शरी-रात्मकं रथं निरवर्तयत् निर्वर्तयति मद्व्यतिरिक्तस्य निर्वर्तयितुरभावात्, तथा निर्व-र्त्यस्यान्यस्यासंभवाच्च अद्यास्मिन्काले सार्वात्म्यानुभवदशायां तं तं प्रकारं कः स्वित्

कोनाम नोस्माकं ब्रूयात्, यथा येन प्रकारेण अनुदेयी अनुदातव्या मद्व्यतिरिक्ता पदार्थसत्ता अभवत् भवति स प्रकारोऽपि दुर्वच इत्यर्थः॥ ५ ॥

अनुवाद–इस कुमारको किसने उत्पन्न किया होगा! यह ( वाक्य अधिक्षेपार्थक है ) यानें बाल्यावस्थावाले इस कुमारको यमराजके पास भेजता हुवा इसका पिता सम्यग्बुद्धिवान् कैसे कहा जाय?। यह बात छोडो. किस पुरुषने यमराजके समीप इस बालकको भेजनेको उस रथको चलाया होगा? यानें जिसनें इस ( यम )लोकमें आनेको संमति दीहो वहभी मूर्खही है । और यह बालक प्रतिगमन ( वापस ) करने योग्य है, तो उसके अनुकूल वचन यानें उपायकथन इस समय हमारे पास कौन करेगा? यानें प्रथम यमराजके पास जाकरके अनन्तर वहासे निर्गमनका उपाय बतानेवालाभी प्राज्ञ नहि होना चाहिये। अथवा कुमारनामक ऋषि अपनें सार्वात्म्यभावका अनुभव करते हुवे आत्मव्यतिरिक्त इतर पदार्थके असंभवको आक्षेपवाचक " किं " शब्दसे बताते है–मुझ ( कुमार)को किसनें उत्पन्न किया है? किसीने नहि. कयोंकी " अजो नित्यः शाश्वतोऽयंपुराणः "यह आत्मा अजन्मा अविनाशी-अखंड और प्राचीन-पुराण है, इस लिये मेरा ( आत्माका ) जन्म संगत हो सक्ता नहिं। और इस देहात्मक रथको किसने बनाया है! मेरे सिवाय दूसरा कुछभी न होनेसें शरीरका बनानेवाला संगत होसक्ता नहिं, और बनाने योग्यभी पदार्थ मेरे (आत्मस्वरूप)से भिन्न नहिं, यानें बनानेवाला और बनानेयोग्य और बनाना-रचनात्मक क्रिया यह सब कलाप पारमार्थिक आत्मस्वरूपही है, तो कौन बनावे? और किसको बनावे? इस कालमें यानें सार्वात्म्यानुभवदशामें उस प्रकारको हमारे पास कौन कहे सक्ता है? की जिस प्रकारसे मुझसें व्यतिरिक्त पदार्थकी सत्ता सिद्ध होसके? यानें आत्मभिन्न पदार्थकी सत्ताका निरूपण दुःशकही॥५।

१३९. ८ । २३ यथाभवदनुदेयीततोअग्रमजायत ।

पुरस्ताद्बुध्न आततःपश्चान्निरयणंकृतम् ॥ ६ ॥

अनुदेयी अनुदातव्यः यथा येन प्रकारेण पितरमनुलक्ष्य अयं कुमारे यमेन दत्तोभवत् भवति, तथा ततः तस्माद्राजप्रसादात्पितुः अग्रं यमसमीपं

गच्छेति वचनस्य अग्रतो वर्तमानं नचिकेतसा यमेन सह वदितव्यं, तंवैप्रवसन्तं गतासीतिहोवाचेत्यादिकं ब्राह्मणान्तरोक्त मजायत प्रादुरभवत् पितोपादिष्टवानित्यर्थः, पुरस्तात्ततः पूर्वं बुध्नः उक्तस्याग्रस्य मूलभूतं यमगृहं प्रति गच्छेति वचनमाततः अतिविस्तृतमासीत् अतस्तदशक्यपरिहारमिति पश्चात्क्रोधं परित्यज्य निरयणं तस्माद्यमान्निर्गमनोपायं कृतं पित्रा आचरितं । यद्वा अनुदेयी आत्मानमनुदातव्या आत्मस्वरूपव्यतिरिक्तान्यपदार्थसत्ता यथा भवन् भवति तदनुगुणं ततः तस्मान्मायाविशिष्टादात्मनः अग्रं स्रष्टव्यविकारजातस्य आद्यं मनस्तत्त्वं सिसृक्षाकारणमजायत उदपद्यत, पुरस्तात्सृष्टे प्रागवस्थायां बुध्नो मूलम् अव्याकृतं मायात्मकं कारणमेव आततः आसमन्तात्ततं विस्तृतमासीत, पश्चात्तमसः उत्पत्त्यनन्तरं निरयणमुद्गतानां कार्याणां मस्मात्कारणान्निर्गमनं घटपटादिभेदेन स्वरूपालंभनं कृतं ब्रह्मणा निर्मितं, तथामृद्विकारोघटादिर्मृदोन्यो न भवति आदित्यानुग्रहाद्ब्रह्मभावंप्राप्तस्य मम विकारः प्रपंचो मदन्यो न भवति इति व्यतिरिक्तस्य पित्रादेराक्षेपः पूर्वोक्तः समर्थितः ॥ ६ ॥

अनुवाद–जिस् प्रकारसें वाजश्रवस पिताके पास इस कुमारको यमराजनें वापस भेजा वह प्रकार यम लोकमें भेजनेके प्राक्कालमें पितानें बताया था. क्योंकी प्रथम क्रोधाधीन होकरके "तुम यमराजके पास जाओ" ऐसे कथनको अन्यथा न करनेंसें क्रोधरहित होकरके वहांसे निर्गमनका उपायभी पितानें बताया. अथवा आदित्यपक्षमें आत्मस्वरूपसें व्यतिरिक्त अन्य पदार्थकी सत्ता लोकमें प्रतीत हुई, तदनुगुण उसके अनुकूल स्रष्टव्यविकृतवर्गका आदिमूल सृष्टिकी रचनाका कारण मनरूप तत्त्व आत्मासे उत्पन्न हुवा. सृष्टिके पूर्वकालमें अव्याकृतमायात्मक तत्त्व कारणरूपहीसे विस्तृत था. उसके अनन्तर अज्ञानकी उत्पत्तिके बाद कारणसें उद्गत कार्योंका घटपटादिभेदसें स्वरूपालंभन निर्माण ब्रह्मानें किया, जैसे मृत्तिका का विकार घटशरावादिक मृत्तिकासे अन्य नहि है तैसेंही आदित्यके अनुग्रहसे ब्रह्मभावको पाये हुवे मुझसे विकारात्मक प्रपंच अन्य नहि है, तो मुझसे अतिरिक्त पिता माता इत्यादिकका संभव कैसे हो सक्ता है ? ॥ ६ ॥

१४०. ८ ८ ३५ पतङ्गमक्तमसुरस्यमायर्याहृदापश्यन्तिमनसाविपश्चितः ।

समुद्रेअन्तःकवयोविचक्षतेमरीचीनांपदमिच्छन्तिवेधसः॥१॥

मायया अक्तं जीवरूपेणाभिव्यक्तमात्मानं विपश्चितो वेदान्ताभिज्ञाः हृत्स्थेन अन्तर्मुखेन मनसा पतंगं पतति व्याप्नोतीति पतंगः परमात्मा तं पश्यन्ति उपाधिपरित्यागेन जीवात्मनः परमात्मना तादात्म्यं सक्षात्कुर्वन्तीत्यर्थः । अपिच ते कवयः क्रान्तदर्शिनो वेदान्ताभिज्ञाः समुद्रे समुद्रवंत्यस्माद्भूतानीति समुद्रः परमात्मा तस्मिन्नधिष्ठानभूतेन्तर्मध्ये सर्वं दृश्यजातं अध्यस्तत्वेन विचक्षते विपश्यन्तीति अतोऽन्यातिरिक्तस्य मिथ्यात्वात् वेधसः विधातारस्ते मरीचीनां वृत्तिज्ञानानां परमधिष्ठानभूतं सच्चित्सुखात्मकं यत्परंब्रह्म तदेवेच्छन्ति तद्भावप्राप्तिमेव कामयन्ते ॥ १ ॥

अनुवाद–माया–अविद्याद्वारा जीवस्वरूपसें अभिव्यक्त आत्माको वेदान्तविज्ञानवाले पण्डितलोक मनको अन्तर्मुख करके सर्वव्यापक परमात्माको अपरोक्ष अनुभवते हैं, याने उपाधिपरित्याग करके जीवात्माका परमात्मासें वास्तविक अभेदको साक्षात् करते हैं. और वही वेदान्तविन् पण्डितलोक "समस्तदृश्यप्रपंचके अधिष्ठानभूत परमात्मामें सकलप्रपंच अध्यस्त–कल्पित है" ऐसा समझते हैं. इसलिये द्रष्टासे अतिरिक्त सकल पदार्थ कल्पित होनेसें उनको मिथ्या समझ करके तत्तदाकारवृत्तिज्ञानके अधिष्ठानभूत सच्चित्सुखात्मक परब्रह्मकोही चाहते है, यानें ब्रह्मभावापन्नही होना चाहते हैं. ॥ १ ॥

१४१. ८ ८ ३५ पतङ्गोवाचंमनसाबिभर्तितांगन्धर्वोवदद्गर्भेअन्तः ।

तांद्योतमानांस्वर्यंमनीषामृतस्यपदेकवयोनिपान्ति ॥ २॥

पतंगः सर्वोपाधिशून्यो व्याप्तः परमात्मा स सृष्ट्यादौ वाचं मनसा बिभर्ति कानि कानि सृष्टव्यानीति पर्यालोचनेन मनसा सकलार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः । स्मर्यतेहि–वेदशब्देभ्यएवादौ निर्ममे स महेश्वर इति । गर्भे हिरण्यमये ब्रह्माडे अन्तर्वर्तमानो गंधर्वो हिरण्यगर्भः तां वाचमवदत् प्रथममुच्चारितवान् द्योतमानत्वादिगुणविशिष्टां तां वाचं कवयः क्रान्तदर्शिनो देवाः ऋतस्य सत्यस्य ब्रह्मणः पदे स्थाने निपान्ति निमूनं रक्षंति ॥ २ ॥

अनुवाद–समस्तोपाधिरहित व्यापक परमात्मा सृष्टिके प्रारंभमें मनसें वाणीको धारण करते हैं, यानें "कौन्‌कौन्‌से पदार्थ सृष्टव्य हैं" ऐसा पर्यालोचन करके मनसें सकलार्थप्रतिपादक वेदका परामर्श-ज्ञान करते भये. स्मृतिमेंभी कहा हैकी "परमेश्वरने वैदिक शब्दोंसें सृष्टिका निर्माण किया है" हिरण्मय ब्रह्माण्डमें (भीतर) वर्तमान हिरण्यगर्भ उस वाणीको प्रथम बोलने भये की जो वाणी अदृशात्मस्वरूपका प्रकाश करनेमें समर्थ है, और क्रान्तदर्शी देवतालोक ब्रह्मपदमें जिस वाणीका रक्षण–सेवन करते हैं. ॥२॥

१४२. ८ ८ ४८ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ।

ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ १ ॥

अभीद्धात् अभितः प्रकाशमानात् परमात्मनो मायाधिष्ठानरूपादुपादानभूतात् ऋतं सत्यं चाजायत ततस्तस्मादेवेश्वरात् रात्री उपलक्षणमेतदह्नोपि, अहश्चरात्रिश्चाजायत, ततः तस्मादेवेश्वरादर्णवः अर्णसोदकेन युक्तः समुद्रश्चाजायत समुद्रशब्दोन्तरिक्षोदध्योः साधारणइति अभिमतार्थस्य प्रकाशनाय अर्णवशब्देन विशेष्यते ॥ १ ॥

अनुवाद–सर्वतः प्रकाशमान मायाकेभी अधिष्ठानरूप और उपादान-कारणभूत परमात्मासें ऋत और सत्य प्रकट हुवे, और उसी परमात्माहीसे समुद्र अथवा अन्तरिक्षभी प्रकट हुवा ॥ १ ॥

१४३. ८ ८ ४८ समुद्रादर्णवादधिसंवत्सरोअजायत ।

अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ २ ॥

अर्णवात् समुद्रात् सद्यात् अधि ऊर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वकालः अजायत। श्रूयते हि–सर्वेनिमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्चेति। सर्वेश्वरः अहोरात्राणि एतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सृजन् मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते ॥ २ ॥

अनुवाद–रचे हुवे समुद्रके अनन्तर संवत्सरोपलक्षित सकलकाल प्रकट हुवा, श्रुतिमेंभी कहा है की "उस पुराण पुरुषसें निमेपसे आदि समग्रसमय विद्युत् कला मुहूर्त काष्ठा यहसब प्रकट हुवे"। यह परमात्मा अहोरात्रोपलक्षित समग्र भूतभौतिक सृष्टिकी रचना करता हुवा निमेषादियुक्त सकल भूतभौतिक प्रपंचका नियामक–स्वामी बनकरके अवस्थित है ॥ २ ॥

१४४. ८ ८ ४८ सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत्।

दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ३ ॥

सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ दिवंच पृथिवीं चान्तरिक्षंच इत्थं त्रिभुवनं स्वः, स्वःशब्दः सुखवाचो दिवोविशेषणं, सुखरूपां दिवं तदेतत्सर्वं धाता विधाता यथा पूर्वं पूर्वस्मिन् काले अकल्पयत् सृष्टवान् तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः ॥ ३ ॥

अनुवाद–कालके ध्वज–प्रकाशक सूर्य चन्द्र सुखप्रद स्वर्ग पृथ्वी अन्तरिक्ष यानें त्रिलोकी इनसबोंका विधान करनेवाले उन् परमेश्वरनें जैसे पूर्व कल्पमें पूर्वोक्त पदार्थोंका निर्माण किया था, तैसेही ( इस कालमें निर्माण किया है और ) अनागत कल्पमें भी निर्माण करेंगे ॥ ३ ॥

॥ ॐ तत्सत् परमात्मने नमः ॥

